प्रासादमण्डपानां च निर्गमस्य प्रदक्षिणम् ।
सालानां गोपुराणां च प्रवेशस्याप्रदक्षिणे ॥ ४६ ॥
अभ्यन्तरे तु भित्तेस्तु गोपुराणां निधापयेत् ।
अग्रमग्रं तथैशान्यां मूले मूले तथाऽङ्गुले ॥ ४७ ॥
अग्नौ मूले समायुक्त्या अग्नौ च वायुगोचरे ।
पञ्च ब्रह्म समुच्चार्य पूर्वादिक्रमशो न्यसेत् ॥ ४८ ॥
तन्मध्ये विन्यसेत्पीतां हेमपङ्कजसंयुताम् ।
पञ्चमृद्भिः समालिख्य कुम्भस्थाद्भिस्तु पूरयेत् ॥ ४९ ॥
शोभनं दक्षिणावर्तं वामावर्तमशोभनम् ।
वामावर्ते भवेत्सम्यक्शान्तिहोमं तु कारयेत् ॥ ५० ॥
यागोपकरणं सर्वमध्याच्छिल्पी प्रकारयेत् ॥ ५१ ॥

इति काश्यपशिल्पे प्रथमेष्टकाविधिश्चतुर्थः पटलः ।

---

अथ पञ्चमः पटलः ।

---

उपपीठप्रमाणम् —

अथ वक्ष्ये विशेषेण उपपीठविधिं परम् ।
स्वाधिष्ठानसमोच्चं वा त्रिपादं सार्धमेव वा ॥ १ ॥
पञ्चभागेऽग्निभागं वा सपादं सार्धमेव वा ।
पादोनाद्विगुणं वाऽथ द्विगुणं वा विशेषतः ॥ २ ॥
एवमष्टविधः ख्यात उपपीठोदयो द्विज ।
दशधा भज्याधिष्ठानमेकाद्वित्रिचतुष्टयम् ॥ ३ ॥
पञ्चांशं वाऽथ निष्क्रान्तमधिष्ठानस्य पादुकम् ।
उपपीठस्य नीव्रं तु पञ्चस्स्थं (श्चांशं) परिकीर्तितम् ॥ ४ ॥
तन्नि(न्नी)व्रमुपपीठं तु पाद्बाह्ये परिकल्पयेत् ।
अथ वाग्नी(थाग्नि) पादसदृशं द्विगुणं त्रिगुणं तु वा ॥ ५ ॥
जगती नीव्रतुल्यं वा उपानसदृशं तु वा ।
एवं हि पञ्चभेदं स्यादुपपीठस्य निर्गमः ॥ ६ ॥

उपपीठस्य निष्क्रान्तं सभादीनामथोच्यते ।
सभादीनां तु पाद्याद्यं निष्क्रान्तं दण्डमु(ण्ड उ)च्यते ॥ ७ ॥
समं तु दण्डमारभ्य नवदण्डावसानकम् ।
उपानं तव (च त) थानीत्रं प्रथमादित्रयत्रयम् ॥ ८ ॥
तदुच्चैर्द्वादशांशे तु उपानोपद्विभागया ।
पद्ममंशेन कर्तव्यं मध्यांशं कम्पमुच्यते ॥ ९ ॥
भूतांशं कण्ठतुङ्गं तु कम्पमब्जं तु पूर्ववत् ।
एकेन वाजनं कुर्यात् कम्पमेकेन कारयेत् ॥ १० ॥
अष्टाङ्गमेवमाख्यातं षडङ्गं तद्विनाऽम्बुजम् ।
कम्पेनाम्बुजमानं तु योग्यं भद्रोपपीठकम् ॥ ११ ॥
ऊर्ध्वे कम्पं विना वाऽपि पञ्चाङ्गमुपपीठकम् ।
उपपीठस्य चोत्सेधं सप्तविंशतिभाजिते ॥ १२ ॥
द्विभागं पादुकोत्सेधं पङ्कजं तत्समं भवेत् ।
कम्पमेकांशमित्युक्तं द्वादशांशं गलोदयम् ॥ १३ ॥
उत्तरं चैकभाग्यं स्यात् तत्समं चोर्ध्वमम्बुजम् ।
अग्निभागं कपोतोच्चं क(क्र)शमालिङ्गमुच्यते ॥ १४ ॥
ग्रैयश्रमेकभागेन प्रतिमानाद्विभागया ।
पानं चैकविभागेन नानं तत्प्रतिभद्रकम् ॥ १५ ॥
द्विभागं पादुकोत्सेधं द्विभागं पाक(पङ्क)जोद्व(द)यम् ।
कम्पमेकेन कर्तव्यमेकेनान्तरितं भवेत् ॥ १६ ॥
द्विभागं प्रतितुङ्गं तु एकेनैव तु वाजनम् ।
अष्टांशं गलमानं तु कम्पमेकेन कारयेत् ॥ १७ ॥
अब्जमेकेन कर्तव्यं कपोतोच्चं गुणांशकम् ।
एकेन लिङ्गमेकेनान्तरितं तु प्रकल्पयेत् ॥ १८ ॥
प्रतितुङ्गं द्विभागेन वाजनं चैकभागया ।
सप्तविंशतिभागे तु नान्मतःप्र( नं तत्प्र)तिसुन्दरम् ॥ १९ ॥
उपपीठस्य चोत्सेधमेकविंशतिभाजिते ।
उपानं तु द्विभागेन तत्समं त्वम्बुजोदयम् ॥ २० ॥

कण्ठमंशेन कर्तव्यं पद्ममंशेन कारयेत् ।
महापादि द्विभागेन पद्ममंशेन कारयेत् ॥ २१ ॥
कम्पमंशेन कर्तव्यं कण्ठोच्चवसुधारया ।
भागेनाङ्कप(न कम्प)मन्येन पद्मं कम्पोऽथ कर्तृभिः ॥ २२ ॥
कम्पमंशेन कर्तव्यमेतत्सौभद्रमुच्यते ।
उपानाद्विगमन्यांशः, अम्बुजांशेन कंधरम् ॥ २३ ॥
द्विभागेनाब्जं कर्तव्य पट्टिका तत्समं(मा) भवेत् ।
वर्त तु ( तुलं) सव(म)भागेन कम्पमंशेन कारयेत् ॥ २४ ॥
सप्तभागं गलोत्सेधं कम्पमंशेन कारयेत् ।
अम्बुजं समभागानां महापट्टी द्विभागया ॥ २५ ॥
अब्जमथांशभागेन कम्पमंशेन कारयेत् ।
पञ्चपञ्चोपपीठैश्च समभागविभाजिते ॥ २६ ॥
कल्याणिका निकट्टम्ना सर्वधाम्नस्तु पूजिता ।
एवं विधिः समाख्यात उपपीठे द्विजोत्तम ॥ २७ ॥
अङ्गनिष्क्रान्तवेशं च अधिष्ठानविधानवत् ।
भूतैश्च व्यालसिंहैश्च मकरैः पत्रजातिभिः ॥ २८ ॥
उपपीठं गलोमि( न्मि )श्रं भूषयन्तु सलक्षणम् ।
मत्यङ्कं मकरस्थान्तं(न) मबाढं(ब्जाढ्यं)रुद्धमस्तकम् ॥ २९ ॥
अम्बले( म्बुजे )नैव कर्तव्यमधिष्ठानोक्तमाचरेत् ।
उपपीठं समाख्यातमधिष्ठानविधिं शृणु ॥ ३० ॥

इति काश्यपशिल्प उपपीठविधानं पञ्चमः पटलः ।

---

अथ षष्ठः पटलः ।

---

अधिष्ठानम्—

---

अथ वक्ष्ये विशेषेण अधिष्ठानविधिं शृणु ।
धरातलमधिष्ठानमाधारं धरणी तथा ॥ १ ॥

भुवनं पृथिवी भूमिः पर्यायवचनादिभिः ।
हर्म्य( म्यं )गारं तु कूटादिनीव्राधिष्ठाननीव्रकम् ॥ २ ॥
तस्मादुपरि पीठस्थ ती(नी)व्रहोमाग्निनिर्गमम् ।
तस्मात्प्रकृतिनीव्रं च सूत्रपातं तु कारयेत् ॥ ३ ॥
यत्रेनाद्येष्टकानां स मानं तत्रैव लक्षयेत् ।
तस्मात्तु घनभित्त्यैव प्रकृत्यान्तं प्रकल्पयेत् ॥ ४ ॥
सुमात्रं प्रकृतेरुध्वें प्रकृत्येच्च( तावे )कहस्तकम् ।
द्विहस्तं वा प्रकृत्युच्चं त्रिहस्तं वा विनाऽऽकृतिम् ॥ ५ ॥
षडङ्गुलं समुत्सेधं षड्षडङ्गुलवर्धनात् ।
उत्तमं मध्यमं चैव अधमं त्वात्तिधाव( त्त्रिधा अ )पि ॥ ६ ॥
प्रकृत्यं च स्थलं ख्यातमन्तमण्डलकस्य तु ।
एवं कृत्वा प्रकृत्यूर्ध्वे होमवाक्पलदेशिक। ॥ ७ ॥
भित्तिपादस्य विष्कम्भं द्विगुणं त्रिगुणं तु वा ।
होमनीव्रमिति ख्यातं तदर्धं वा बलाश्रितम् ॥ ८ ॥
तद्धोमप्रकृतीनीव्रैर्द्वित्रिदण्डैरथापि वा ।
आयानि प्रत्यबाहन्ति पादुपापिङ्गलं तु वा ॥ ९ ॥
होमनीव्रं समं प्रोक्तं द्विवर्धं द्विजसंनिभम् ।
होमं तु गन्धमानेन होमोर्ध्वेऽब्जं प्रकल्पयेत् ॥ १० ॥
अब्जस्योच्चसमं वेश मब्जाधोविपानवम् ।
तस्योपरि अधिष्ठानं सोपपीठान्वितं तु वा ॥ ११ ॥
अन्यद्धोमं प्रकृत्यूर्ध्वे पोपवा( सोपाना )नां प्रकल्पयेत् ।
तदूर्ध्वे तरतालं वा सोपपीठमथापि वा ॥ १२ ॥
दलापानं विनाऽऽधारं होमोर्ध्वे वा प्रकल्पयेत् ।
प्रकृतिं समसूत्रं तु कल्पयेद्देशिकोत्तमः ॥ १३ ॥
होपमामे उपानादि हर्म्यनिष्क्रान्तवेशनम् ।
आर्तो(अर्धो)त्सेधांशमानेनाधिष्ठानस्योच्चयं विदुः ॥ १४ ॥
पादोदयोर्ध्वमानं वा षडष्टांशोनमेव वा ।
अग्रपादविशालं तु दण्डमित्यभिधीयते ॥ १५ ॥

एकदण्डं समारभ्य अर्धदण्डविवर्धनात् ।
या(स)पादा पञ्चसङ्ख्या तु अग्निदण्डावसानकम् (का)॥ १६ ॥
पद्माह्मे पादनिष्क्रान्तं तन्निभागविभाजिते ।
उपानं व्यासमेकांशं शेषं जगति विस्म(स्त)रम् ॥ १७ ॥
आमुदावंशमेकांशं तन्नीव्रं जगतीसमम् ।
कुमुदे पट्टमंशेन तत्समं कर्णवेशनम् ॥ १८ ॥
सर्वेषामम्बुजानां तु नीव्रं तुङ्गसमं भवेत् ।
कम्पानामपिका(पि वा)शेषं चतुर्भागैकनिर्गमम् ॥ १९ ॥
महावाजननिष्क्रान्तं तुङ्गं तुल्याक्षि एव वा ।
त्रिपादं वाऽथ निष्क्रान्तं यथाबलवशान्न्यसेत् ॥ २० ॥
जन्मादिपञ्चवर्गेषु तत्तदङ्गावसानके ।
द्वारार्थं वा स्थलार्थं वा चोदयेत्सद्धरातले ॥ २१ ॥
उपानं जगतीकूपं खण्डं चा(च)पट्टिका तथा ।
पञ्चवर्गमिति ख्यातं जयादर्द्धं(र्धं)तदा बुधः ॥ २२ ॥
द्वारं च जलधारं च स्थलं चाप्रतिबन्धकैः ।
मेत(प्रतेरू)ऊर्ध्वे तु कर्तव्यमङ्गं चैतन्न कारयेत् ॥ २३ ॥
मस्यं चेतु धनं चेतु पिपा(विप)दाम(मा)स्पदं सदा ।
तस्मात्सर्वप्रयत्नेन प्रत्यङ्गच्छेदनं विना ॥ २४ ॥
अधिष्ठानं द्विधा ज्ञेयं प्रतिबद्धाङ्घ्रिबन्धनम् ।
प्रत्येकानां तु भेदेन प्रोच्यते द्विजसत्तमाः ॥ २५ ॥
सर्वेषा प्रतिपन्था(बन्धा)नां कुमुदं वृत्तमुच्यते ।
पादपन्थ(बन्ध)तलानां तु वस्वशृङ्ग(श्रं कु)मुदं भवेत् ॥ २६ ॥
तथो(योः)शंकरमेतस्मिन्भवेत्तत्कर्तृनाशनम् ।
प्रासादं प्रतिबद्धं चेत्तद्भेदानेकशंकरम् ॥ २७ ॥
कूटकोष्ठादिकानां तु कर्तव्यं तच्छुभावहम् ।
तदेवाङ्घ्रिप्रसंधे(बन्धे)न क(त)स्मिन्शंकरमुत्तमम् ॥ २८ ॥
अशुभं विपरीतं च वास्तु राष्ट्रनृपस्य च ।
तस्मात्सर्वप्रयत्नेन वर्मवर्गेण शंकरम् ॥ २९ ॥

१

अधिष्ठानस्य चोत्सेधमेकोनविंशदंशिते ।
उपानं चेतुभागेन सप्तांशे जगती भवेत् ॥ ३० ॥
षडंशं कुमुदोत्सेधमालिङ्गं त्वेकभागया ।
त्रिपट्टं त्वेकभागेन प्रत्युत्सेधं द्विभागया ॥ ३१ ॥
वाजिनं चैव भागेन प्रतिबन्धमिदं जगत् ।
उपानरहितं शेषं पूर्ववन्नैकधाऽपि वा ॥ ३२ ॥
अधिष्ठानस्य चोत्सेधं पञ्चविंशतिभाजिते ।
शिवांशं पादुकोत्सेधं जगती वसुभागया ॥ ३३ ॥
धात्वंशं कुमुदोत्सेधं व्योमांशं कम्पमानकम् ।
अतलांशं गलोतु(त्तु)ङ्गं शस्यां(श्यं)शे चोर्ध्वकम्पकम् ॥ ३४ ॥
महापट्टिगणांशं तु तदूर्ध्वांशेन कम्पकम् ।
पादपन्थ(बन्ध)मिति ख्यतमुपानरहितं तथा ॥ ३५ ॥
एतच्च पादपन्थं(बन्धं) च नानाभेदैश्च कीर्तितम् ।
त्रिसप्तांशे तलोत्सेधे कृतांशैनैकपादुका ॥ ३६ ॥
अम्बुजं सार्धभागेन कम्पमर्धांशमुच्यते ।
सप्तांशं जगतीतूर्णं रसांशं कुमुदोदयम् ॥ ३७ ॥
आलिङ्गमेकभागेन त्रिपट्टं त्वेकभागया ।
द्विभागं प्रतितुङ्गं स्याद्भागमेकेन वाजनम् ॥ ३८ ॥
प्रतिवक्त्रमिदं नाम प्रतिबद्धे तु भेदिनम् ।
तदेवं पक्षभागे तु उपानं परिकीर्तितम् ॥ ३९ ॥
आलिङ्गं च द्विभागेन शेषं पूर्ववदेव हि ।
उपानोपरि पद्मं च कम्पं चैकं परित्यजेत् ॥ ४० ॥
तच्च प्रतिक्रमं ख्यातं सर्वदेवालया(ये) हिक(त)म् ।
षड्विंशद्विज(भ)जेदुच्च(च्चं)समु(मं) वा चैकभागया ॥ ४१ ॥
द्विभागेन दलं कुर्यात् कम्पमेकेन कारयेत् ।
षडंशं जगतीरुच्चमेकांशं दलमानकम् ॥ ४२ ॥
खण्डमेकेन कर्तव्यमेकेनाब्जं तु कारयेत् ।
कुमुदोच्चं गुणांशेन पद्ममेकेन कारयेत् ॥ ४३ ॥

कम्पमेकेन कर्तव्यं कण्ठोच्चं तु विभागया।
एकांशं कण्ठतुङ्गं तु तत्समं तु दलोदयम् ॥ ४४ ॥
महापट्टी द्विभागेन दलमेकांशमानतः।
कम्पमेकेन कर्तव्यमष्टाश्रं कुमुदं कुरु ॥ ४५ ॥
अम्भोजकेसरं ख्यातं पादपूज्यं तु भेदिनम्।
एकोनविंशदंशं तु तलोत्सेधं विभाजिते ॥ ४६ ॥
उपानमेकभागेन अब्जोच्चमनलांशकम्।
कम्पोच्चं मध्यभागेन जगत्युच्चं युगांशकम् ॥ ४७ ॥
अम्बुजं त्वर्धभागेन दलमर्धांशमानतः।
अर्धांशं पद्मतुङ्गं तु ग(गु)णांशं पट्टमानतः ॥ ४८ ॥
पद्मं मध्यां(द्मम्मर्धां)शमानेन तत्समं कम्पमुच्यते।
अत्यर्धांशं तु खण्डोच्चं कम्पमन्येन कारयेत् ॥ ४९ ॥
पद्ममन्येन कर्तव्यं पट्टिकासार्धभागया(तः)।
अम्बुजं सार्धभागेन कम्पमध्येन कारयेत् ॥ ५० ॥
पुष्पपुष्कलमाख्यातं पादबन्धे तु भेदिनम्।
द्वात्रिंशद्विभजेदायमुपोपानाद्विभागया(तः) ॥ ५१ ॥
उपानं त्वेति (क) भागं स्यात्सप्तांशं कमलोदयम्।
कण्ठमेकेन कर्तव्यं पद्ममेकेन कारयेत् ॥ ५२ ॥
कुमुदोच्चं चतुर्भागमेकांशं दलमुच्यते।
कम्पमेकेन कर्तव्यं गुणांशं गलमानतः ॥ ५३ ॥
कम्पमेकेन कर्तव्यमूर्ध्वकम्पं प्रकल्पयेत्।
कपोतोच्चं युगांशेन आलिङ्गं त्वेकभागिना(गतः) ॥ ५४ ॥
एकेनान्तरितं कुर्यात्प्रतितुङ्गं द्विभागया (तः)।
वर्ज(वाज)नं तु द्विभागेन कल्पयेत्तु क्रमेण तु ॥ ५५ ॥
प्रतिबन्धे तु भेदं स्यात् श्रीबद्धान्तमुदाहृतम्।
अष्टका(को)नस्य चोत्सेधमष्टाविंशतिभाजिते ॥ ५६ ॥
उपानं त्वेकभागेन जगत्युच्चं रसांशकम्।
कुमुदं पञ्चभागेन कम्पमेकेन कारयेत् ॥ ५७ ॥

गुणांशं गलमानं तु कम्पमेकेन कल्पयेत् ।
पद्ममेकेन कर्तव्यं कपोताच्चं गुणांशकम् ॥ ५८ ॥
आलिङ्गं त्वेकभागेन त्वरितं तु प्रकल्पयेत् ।
प्रतीतं य(प)द्विभागेन शतांशं वाजनोदयम् ॥ ५९ ॥
प्रतिबन्धस्य वर्गं स्यान्मश्चमन्थमुदाहृतम् ।
तदेवाऽऽलिङ्गकादूर्ध्वं विजयंया(विभज्यं)त्रिंशदंशकैः ॥ ६० ॥
कल्प्यं श्रीकान्तवन्मं(नाम्ना) तु पादबन्धेऽतिभेदितम् ।
तुङ्गे षड्विंशदेशं तु एकांशं पादुकं भवेत् ॥ ६१ ॥
द्विभागं दलमानं तु कम्पोच्चं शशिभागिना(गतः) ।
षण्डां(डं) शं तु जगत्युच्चं चतुर्भागं घटोदयम् ॥ ६२ ॥
कम्पमेकेन कर्तव्यं पद्मोच्चं तु द्विभागया(तः) ।
ऊर्ध्वकम्पमर्धकांशं गलमानं द्विभागया ॥ ६३ ॥
वाजनं त्वेकभागेन सार्धांशं कमलोदयम् ।
कम्पमेकेन कर्तव्यं श्रेणीबद्धमिदं भवेत् ॥ ६४ ॥
पादबन्धे तु भेदं स्यात्सिंहभाद्यैर्विभूषितम् ।
त्रिषडंशतलोत्सेधं कृत्वा सार्धांशपादुकम् ॥ ६५ ॥
कम्पमर्धांशमित्युक्तं भूतांशं पङ्कजोदयम् ।
गलमन्येन कर्तव्यं पद्ममेकेन कारयेत् ॥ ६६ ॥
कुमुदोच्चं त्रिभागैकं दलमेकेन कारयेत् ।
आलिङ्गमेकभागेन त्वरितं तत्समं भवेत् ॥ ६७ ॥
प्रत्ते(प्रते)रुच्चं द्विभागेन वाजनं त्वेकभागया ।
अब्जबन्धमिदं नाम्ना भेदे तत्प्रतिबन्धके ॥ ६८ ॥
तलं द्वाविंशदंशे तु द्विभागं पादुकोन्नतम् ।
अब्जमेकेन कम्पं तु एकांशेन प्रकल्पयेत् ॥ ६९ ॥
जगतीपञ्चभागे तु कुमुदं चतुरंशकम् ।
पद्ममेकेन कर्तव्यं कम्पमेकेन कारयेत् ॥ ७० ॥
कण्ठतुङ्गद्विभागेन कम्पमेकेन कारयेत् ।
शिरां(वां)शं दलतुङ्गं तु महापट्टी द्विभागया(तः) ॥ ७१ ॥

कम्पमेकेन कर्तव्यं वप्रबन्धमिति स्मृतम् ।
पादबन्धस्य वर्गं स्यात्सर्वधामसु पूजयेत् ॥ ७२ ॥
तन्महापट्टिकामानं कपोतं वो(वा)तबन्धकम् ।
कपोतोपरि कम्पोर्ध्वे त्रिपट्टं त्वेकभागया ॥ ७३ ॥
प्रत्युत्सेधं द्विभागेन वाजनं त्वेकभागया ।
शुकं षड्विंशदेशे तु कल्पयेत्प्रतिसुन्दरम् ॥ ७४ ॥
अधीनस्यादि(धिष्ठानस्य) चोत्सेधं त्रयोविंशतिभाजिते ।
उपानमेकभागेन पद्ममेकेन कम्पकम् ॥ ७५ ॥
रं(अं)शेन पट्टिकां विद्यात् कम्पमेकेन कल्पयेत् ।
पद्ममेकेन कण्ठान्तमेकांशेनैव कल्पयेत् ॥ ७६ ॥
एकांशेनाम्बुजं कुर्याद्गुणांशं कुमुदोदयम् ।
पद्ममेकेन कर्तव्यमालिङ्गं त्वेकभागया(तः) ॥ ७७ ॥
त्रिपट्टं शिवभागं तु द्विभागं प्रतिमानकम् ।
वाजनं त्वेकभागेन कल्पयेत्तु यथाक्रमम् ॥ ७८ ॥
प्रतिबन्धे तु भेदं स्याच्छ्रीकण्ठान्तमुदाहृतम् ।
उपानमेकभागेन पद्ममेकेन कम्पकम् ॥ ७९ ॥
द्व्यंशेन पट्टिकाकम्पमेकांशेन प्रकल्पयेत् ।
गलमेकेन कर्तव्यं पद्ममेकेन कारयेत् ॥ ८० ॥
कुमुदं तु त्र्यंशेन पद्ममेकांशमानतः ।
आलिङ्गं त्वेकभागेन त्वरितं शशिभागया ॥ ८१ ॥
अधिष्ठानस्य चोत्सेधं द्वाविंशतिविभाजिते ।
एतत्क्षीरबन्धं स्यात्प्रतिबन्धे तु भेदितम् ॥ ८२ ॥
पादुकं चैकभागेन भागेनाब्जं तु कम्पकम् ।
कम्पमेकेन कर्तव्यं कण्ठमानं द्विभागया ॥ ८३ ॥
कम्पमेकेन भागेन पट्टिकांशेन कम्पकम् ।
द्विभागं दलमागन्तु(नं तु)गलमेकांशमानतः ॥ ८४ ॥
अम्बुजं त्वेकभागेन कुम्भमानं गुणांशकम् ।
एकांशं दलमानं स्याद्द्व्यंशेनालिन्दमुच्यते ॥ ८५ ॥

त्रिपट्टं त्वेकभागेन प्रतिमानं द्विभागया ।
वाजनं त्वेकभागेन भानुद्विगुणितांशके ॥ ८६ ॥
एतच्च प्रतिबन्धं स्याद्भेदं कलशबन्धनम् ।
अधिष्ठानस्य चोत्सेधं चतुर्विंशतिभाजिते ॥ ८७ ॥
पादुकं तु त्रिभागेन तत्समं पङ्कजोदयम् ।
आर(अब्ज)मेकेन कर्तव्यं जग(त्यु)च्चं रसांशल(क)म् ॥ ८८ ॥
पद्ममेकेन भागेन कण्ठपद्मं तु भागया ।
वे(ई)शांशं कलशोत्सेधं कमलं त्वेकभागया ॥ ८९ ॥
प्रतिबन्धे तु भेदं स्याच्छ्रीकारं नाम म्यु(तू)च्यते ।
भानुद्व्यंशे तलोत्सेधं द्विभागं पादुकोदयम् ॥ ९० ॥
उपोवा(पा)नं शिवासं(शं) स्यात्षडशं दलमानकम् ।
कण्ठमंशेन कर्तव्यमंशेनाजिं(ब्जं) प्रकल्पयेत् ॥ ९१ ॥
गुणांशं खण्डमानं तु दलमेकेन वृत्तकम् ।
कम्पमेकेन कण्ठं तु गुणांशं दलमानकम् ॥ ९२ ॥
व्योमांशं दलमानं तु द्विभागं पट्टिका भवेत् ।
एकांशं दलमानं तु कम्पमेकेन कारयेत् ॥ ९३ ॥
सुन्दराणां बु(त्र्यम्बु)जानां पादबन्धे तु भेदितम् ।
चतुःसप्तद्विभागं तु तलमानविभाजिते ॥ ९४ ॥
द्विभागं पादुकं ख्यातं दलमानं युगांशकम् ।
गलमेकेन कर्तव्यमम्बुजं तु त्रिभागया ॥ ९५ ॥
द्विभागं पट्टिकामानमंशं पादुकमुच्यते ।
जगतीचतुरश्रं तु पद्ममंशं द्विजोत्तम ॥ ९६ ॥
कण्ठमंशेन पत्रं तु शस्यं(श्यं)शं प्रविधीयते ।
गुणांशं कुमुदोत्सेधं पद्ममंशेन कल्पयेत् ॥ ९७ ॥
कम्पमंशेन कर्तव्यं त्रिपद्मं त्वेकभागया ।
प्रतिमानं भवेद्वं(द्व्यं)शं वाजनं तु शिवांशकम् ॥ ९८ ॥
एवं नलिनकान्तं स्यात्सर्वदेवप्रियावहम् ।
त्रयोविंशतिभागे तु तु(त)लोच्चं तु विभाजिते ॥ ९९ ॥

साधांशं पादुकोत्सेधमुपोपानं शतांशकम् ।
अथो (धः) पद्मं विभागं स्यादेकांशं कण्ठमुच्यते ॥ १०० ॥
तदुद्वेपनमेकांशं कुमुदोच्चं गुणांशकम् ।
तदूर्ध्वं पद्ममेकांशमेकांशमपमानकम् ॥ १०१ ॥
कण्ठं द्व्यंशेन कर्तव्यमेकांशं चाथ पट्टिका ।
एकांशं पद्मतुङ्गं (तु आ)लिङ्गं त्वेकविभागया ॥ १०२ ॥
त्रिपट्टं तु यथांशं तु प्रतिमानं विभागया ।
एकानापू (कोनं वा) जनं कुर्यात्तच्छ्रीसौन्दर्यमुच्यते ॥ १०३ ॥
प्रतिबद्धस्य भेदं स्यादतं(न्तं) चापुनराश्रया ।
चतुर्विंशतिभागं तु तलोच्चं तु विभाजिते ॥ १०४ ॥
उपानं त्वेकभागेन द्विभागं तु दलोदयम् ।
तदूर्ध्वे कम्पमेकांशं जगत्युच्चं रसांशकम् ॥ १०५ ॥
वेदांशं कुमुदोत्सेधं पद्ममंशेन कल्पयेत् ।
कण्ठमेकांशमित्युक्तमूर्ध्वेपद्मं शिवांशकम् ॥ १०६ ॥
वाजनोच्चं द्विभागेन एकांशं पद्मतुङ्गकम् ।
आलिङ्गं त्वेकभागेन त्रिपट्टं तत्समं भवेत् ॥ १०७ ॥
प्रतिमानं द्विभागं स्याद्वाजनं त्वेकभागया ।
स्कन्दस्कन्दमिदं नाम्ना प्रतिबन्धस्य भेदकम् ॥ १०८ ॥
धरातलोच्चं विभजेत्त्रयोविंशतिभागया ।
उपानोदयमेकांशं षडंशं त्वम्बुजोदयम् ॥ १०९ ॥
एकांशं कण्ठमानं तु ऊर्ध्वे पद्मं शिवांशकम् ।
युगांशं तु घटोत्सेधमेकांशं पद्मकम्पकम् ॥ ११० ॥
कम्पमेकेन कर्तव्यं द्विभागं कंधरोदयम् ।
एकांशं कम्पमानं तु ऊर्ध्वे पद्मं तु तत्समम् ॥ १११ ॥
कपोतोच्चं गुणांशं तु आलिन्दं त्वेकभागया ।
एतच्चाम्बुजकान्तं स्यात्पादबन्धे तु भेदितम् ॥ ११२ ॥
एवं त्वनेकभेदेन प्रोच्यते तु धरातलम् ।
तलोत्सेधमिवात्र स्याद्धीमाधिक्यात्म(क्यं न) दोषभाक् ॥११३॥

अंशं वाऽर्धत्रिपादं वा बल्लाङ्गावबलान्वितम् ।
त्रिपट्टस्य विशालं तु द्विविधं प्रविधीयते ॥ ११४ ॥
मूलपादसमं व्यासं पादमूले त्रिपट्टकम् ।
पादान्तरे त्रिपट्टानां व्यासं त्री(त्रि)पाददण्डकम् ॥ ११५ ॥
पादबाह्ये समावेशं निर्व्यं चैव समं भवेत् ।
अयुग्मं युग्मसंख्या वा पादान्तरे प्रकल्पयेत् ॥ ११६ ॥
हंसे वा(र्हंसैर्वा) मकरैर्या(र्वाऽ)लिभूतहंसैर्विभूषितम् ।
प्रत्यग्रमकरैर्व्यालैर्विद्याधरविनिर्मितम् ॥ ११७ ॥
त्रिपट्टोर्ध्वे प्रतिह्येवं सर्वत्र परिकल्पयेत् ।
ऊर्ध्वाधस्त्वम्बुजोपेतं कुमुदं वृत्तमाचरेत् ॥ ११८ ॥
अन्ये वै कुमुदं सर्वे प्रतिबन्धाङ्घ्रिबन्धयोः ।
वृत्तं च वसुकोणं च क्रमेणैव तु कल्पयेत् ॥ ११९ ॥

इति काश्यपशिल्पेऽधिष्ठानविधिः षष्ठः पटलः ।

---

अथ सप्तमः पटलः ।

---

## नालप्रतिष्ठा ।

---

अथ वक्ष्ये विशेषेण निर्माल्यद्वारलक्षणम् ।
प्रतिपन्थे(बन्धे) प्रतेरन्ते दनन्ये(लान्ते) पट्टिकान्तके ॥ १ ॥
गलान्ते कुमुदं चैव वि(व)प्रान्ते पादुकान्तके ।
छिद्रं कुर्यात्तथा चोर्ध्वे गलं तस्मात्सुयोजयेत् ॥ २ ॥
भान्वङ्गुलं समारभ्य गुणाङ्गुलविबन्ध(वर्ध)नात् ।
चतुर्विंशाङ्गुलं यावत्तावत्पञ्चविधा(धं)तथा ॥ ३ ॥
भित्तिबाह्यगतं ह्येव तस्यार्धं गर्भगेहके ।
वेशयित्वाऽथ वा भित्तेर्ह्यभ्यन्तरसमं तु वा ॥ ४ ॥
वस्वङ्गुलं समारभ्य द्विद्व्यङ्गुलविवर्धनात् ।
कलाङ्गुलावसानं तु विस्तारं पञ्चधाक्रमम् ॥ ५ ॥

तन्मूलं तारपञ्चांशं त्र्यांशं त्वग्रविस्तृतम् ।
तद्विस्तारसमं पाया(दा)त्रिपादं वाऽथ तद्घनम् ॥ ६ ॥
विस्तारस्य त्रिभागैकं छिद्रतारोन्नतं तथा ।
नालमध्ये तु कर्तव्यं निम्नोन्नतविवर्जितम् ॥ ७ ॥
मूलादग्रोन्नतं किंचिन्मूलं हंसस्य चान्वितम् ।
गजोष्ठ(ष्ठ)सदृशालम्ब्यं(म्बी) यथासुन्दरमाचरेत् ॥ ८ ॥
व्यालो वा सिंहभूतो वा नालं धृत्वा तु संस्थितः ।
नालमेवं प्रकर्तव्यं सौम्यं प्रासादमध्यगम् ॥ ९ ॥
स्थापयित्वा विशेषेण अनेन विधिना तथा ।
नालं गन्धोदकैर्दिव्यैः स्थापयित्वा हृ(मु)दा बुधः ॥ १० ॥
शान्तिहोमं तु कुर्वीत वारुणं सूक्तमुच्चरन् ।
स्थापकः सुप्रसन्नात्मा सुमुहूर्ते सुलग्नके ॥ ११ ॥
नालं तु स्थापयेद्धीमान्स्थपतिः स्थापकान्वितः ।
सर्वालंकारसंयुक्तं सर्वतोयसमन्वितम् ॥ १२ ॥
सुधया गुडतोयैश्च बन्धयेत्सुदृढं यथा ।
पुंशिलायां तु कर्तव्यं नालं तु द्विदलान्वितम् ॥ १३ ॥
नालस्थापनमेवं तु स्तम्भलक्षणमुच्यते ॥ १४ ॥

इति काश्यपशिल्पे नाललक्षणं सप्तमः पटलः ।

---

अथाष्टमः पटलः ।

---

पदवर्गः ।

---

अथ वक्ष्ये विशेषेण चरणायामविस्तरम् ।
आकारं भूषणं चैव संक्षेपाच्छृणु सुव्रत ॥ १ ॥
स्तम्भं च तलिपं चैव चरं जङ्घमेव वा ।
स्थाणुः स्थूणश्च पादश्च पर्यायवचनानि च ॥ २ ॥
उक्तोत्सेधांशमानेन पादायामो विधीयते ।
उक्ताधिष्ठानतुङ्गस्य द्विगुणं वाऽङ्घ्रितुङ्गकम् ॥ ३ ॥

तस्मात्तारन(त)लोच्चं तु षष्ठांशं त्वधिकं तु वा ।
पदोच्चं पङ्क्तिनन्दाष्ट भागैकं वाऽङ्घ्रिविस्तरम् ॥ ४ ॥
दारुपादतलं ह्येतत्कुडयपादमथोच्यते ।
तदर्धं वा त्रिभागैकं चतुर्भागोनमेव वा ॥ ५ ॥
आढयस्तम्भविशालं स्यादेतत्सर्वं सुधर्मसु ।
मतेरुत्तरसीमान्ते विशालस्तम्भ उच्यते ॥ ६ ॥
उपानाद्युत्तरान्तस्थो निखाताङ्घ्रिस्तदुच्यते ।
तुङ्गं सप्तांशमथवा नवधर्मांश एव वा ॥ ७ ॥
रुद्रभान्वंशकं वाऽथ कृत्वैथां(कां)शाङ्घ्रिविस्तरम् ।
तन्मूलतारमाख्यातं तत्तारं तु तथा भजेत् ॥ ८ ॥
एकभागविहीनं तु शेषमग्रविशालकम् ॥
एकादिषोडशान्तं च तलं मत्येवमाचरेत् ॥ ९ ॥
मूलादग्रं युगास्रं तु कुम्भमन्थादिसंयुतम् ।
ब्रह्मकान्तमिति ख्यातं वस्वस्रं विष्णुकान्तकम् ॥ १० ॥
रसास्रमिन्द्रकान्तं स्याच्चन्द्रकान्तं तल।स्रकम् ।
कण्ठमानेन तन्मूलं तथैवाग्रं तु प्रकल्पयेत् ॥ ११ ॥
स्तम्भाग्रे चैव तन्माने चतुरश्रं समन्वितम् ।
तयोर्मध्येऽपि वस्वश्रं षोडशाश्रमथापि वा ॥ १२ ॥
वृत्ताकारं तु वा वि(व)प्रं कुम्भमण्डादिसंयुतम् ।
कुम्भमण्डादिहीनं यत्तदाहू रुद्रकान्तकम् ॥ १३ ॥
मूलादग्रविशालं तु मध्येऽष्टाश्रं द्विमण्डकम् ।
रुद्रकान्तामिति ख्यातं मूलादग्रं तु वर्तुलम् ॥ १४ ॥
कुम्भमण्डादि तन्मध्ये अष्टाश्रं तावदुच्यते ।
चतुरश्रमधोभागे अष्टाश्रं मध्यमं तथा ॥ १५ ॥
तदुद्धे (दूर्ध्वे)वृत्तमेवं स्यात्त्रिभागं तुङ्गसदृशम् ।
शिवच्छंदमिति ख्यातं शिवहर्म्ये प्रसंस्थितम् ॥ १६ ॥
दण्डं सार्धद्विदण्डं वा मूलपद्मासनोदयम् ।
द्विगुणं पत्रविस्तारं पद्माकारं तु कारयेत् ॥ १७ ॥
तन्मध्ये कर्णिकायां तु चरणस्थापनं कुरु ।
यथेष्टाकृतिसंयुक्तं कुम्भमण्डादिसंयुतम् ॥ १८ ॥

चक्रवाकतलं मध्ये भूषितं पद्मपादुकम् ।
पत्रमूलाङ्घ्रिमध्ये तु व्यालेन व्यालपादुकम् ॥ १९ ॥
मूलेभपादमानेन गजपादमुदाहृतम् ।
मूले बिम्बादिभिः कुर्याद्यथेष्टाकृतिसंयुतम् ॥ २० ॥
कुम्भमण्डादिसंयुक्तं तत्तन्नाम्ना प्रकीर्तितम् ।
वृत्ताकारे तदायामे शुण्डुभेदैः समन्वितम् ॥ २१ ॥
कुम्भमण्डादिसंयुक्तं शुण्डुपादमुदाहृतम् ।
मुक्तादामैरलंकृत्य पिण्डिपादमुदाहृतम् ॥ २२ ॥
विष्कम्भकर्णमानेन स्तम्भाग्रे चतुरश्रकम् ।
तदधस्त्वर्धदण्डानामब्जमष्टाश्रसंयुतम् ॥ २३ ॥
मण्डमानेन तस्याधो वस्त्रश्रं परिकल्पयेत् ।
तदधः पूर्ववत्पद्मं तस्याधो दण्डमानतः ॥ २४ ॥
चतुरश्रसमायुक्तं तस्य छत्रं तु पूर्ववत् ।
मूले वा वेदशेषाश्रं छत्रखण्डं तदुच्यते ॥ २५ ॥
मध्यपट्टं तु वस्वश्रं श्रीकण्ठं तदुदाहृतम् ।
मध्ये पट्टं कलास्रं चेच्छ्रीवज्रं स्तम्भमुच्यते ॥ २६ ॥
मूलादग्रं युगाग्रं स्यात्रिपट्टं क्षेपणान्वितम् ।
क्षेपणस्तम्भमाख्यातं पट्टपत्रादिशोभितम् ॥ २७ ॥
स्तम्भाकारत्रिभागैकचतुर्भागैकमेव वा ।
स्तम्भमध्ये शिखां कुर्यादेतत्स्तम्भविशेषतः ॥ २८ ॥
स्तम्भमूले तु पद्मानि स्तम्भमाने तु(न) कल्पयेत् ।
स्थ(स्त)म्भलक्षणमाख्यातं बोधिकालक्षणं शृणु ॥ २९ ॥

इति काश्यपशिल्पे स्तम्भलक्षणेऽष्टमः पटलः ।

---

अथ नवमः पटलः ।

---

## बोधिका

---

अथ वक्ष्ये विशेषेण बोधिकालक्षणं परम् ।
मूलपादस्य पादेन श्रेष्ठे(ष्ठं) मध्ये तु मध्यमम् ॥ १ ॥

अग्रपादविशालं स्यात्समं कन्यासबोधिका ।
विस्तारसदृशोत्सेधं पञ्चदण्डायतान्वितम् ॥ २ ॥
उत्तमा बोधिका ख्याता तारद्वित्र्यंशमुन्नता ।
चतुर्दण्डायतोपेता मध्यमा सा प्रकीर्तिता ॥ ३ ॥
विस्तारस्यार्धतुङ्गं तु गुणदण्डायुतान्वितम् ॥
कन्यासबोधिकाख्यातं त्वङ्घ्रयोर्बोधिकान्वितम् ॥ ४ ॥
बोधिकाश्च त्रि(याश्चि)भागे तु एकांशेनार्धपट्टिकम् ।
मध्यांशेन तरङ्गं स्याल्लताद्यैर्भूषितं तु वा ॥ ५ ॥
तदधस्त्वेकभागेन मुष्टिबन्धं च कारयेत् ।
दण्डत्रिपादमर्धं वा छायामानं तदंशके ॥ ६ ॥
ऊर्ध्वाधः पट्टिकाधस्ताच्छायाकारं प्रकल्पयेत् ।
अधस्ताद्बोधिकाकारमलंकारं वदाम्यहम् ॥ ७ ॥
मध्ये पट्टत्रिभागैकं विस्तारार्धमथापि वा ।
पार्श्वयोरुभयोः शेषं तरङ्गस्थानमुच्यते ॥ ८ ॥
सक्षुद्रक्षेपणं मध्यात्पट्टपत्राद्यलंकृतम् ।
पार्श्वयोस्तु तरङ्गं स्यात्समाच्चान्योन्यहानकम् ॥ ९ ॥
बोधिविस्ताररन्ध्रं वा त्रिपादं वाऽग्रनीलकम् ।
तन्मूलसदृशं व्यासं बोधिकायाः प्रकल्पयेत् ॥ १० ॥
अन्यद्दो(द्वो)धं षडंशांशं कृत्वोर्ध्वे पट्टिकान्वितम् ।
ऊर्ध्वपद्ममधासे(धांशे)न कण्ठमध्येन कारयेत् ॥ ११ ॥
अधोपद्मं द्विभागेन चोर्ध्वे पट्टांशमुच्यते ।
अधस्त्वम्बुजमध्यांशं कल्पयेत्तु क्रमेण तु ॥ १२ ॥
पद्मस्य मुकुलाकारमग्रादधो गतं कुरु ।
अग्रनिष्क्रामयुक्तं वा छायाकारमथापि वा ॥ १३ ॥
पार्श्वयोर्मुष्टिबन्धाग्रं व्याल आप.(या)दिकल्पितम् ।
भुजे वा मकरैर्व्यालैः पट्टकाद्यैर्विभूषितम् ॥ १४ ॥
रत्नबन्धक्रियावालिचित्रवाग्रस्तपट्टिका ।
बोधिका या स्त(त)रङ्गाढ्या तन्मध्ये दण्डमानतः ॥ १५ ॥
युगाश्रं पट्टसंयुक्तं तारोच्छ्रायं तु वृत्तकम् ।
नानाचित्रैरलंकृत्य बोधिकाचित्रबोधिका ॥ १६ ॥

पत्रैर्विचित्रिता पत्रबोधिका तु प्रकीर्तिता ।
महार्णवतरङ्गाभस्तरङ्गस्तु प्रकल्पयेत्(ल्प्यताम्) ॥ १७ ॥
पादमर्धत्रिपादं वा भित्त्यै स्तम्भस्य निर्गतम् ।
चतुरष्टाश्रवृत्तानां क्रमात्साधारणं तु वा ॥ १८ ॥
बोधिकायास्तथाग्रं तु वीरकण्ठयुगाग्रकम् ।
अग्रपादसमं तच्च त्रिपादं तुङ्गमुच्यते ॥ १९ ॥
सर्वेषामपि पादानां वीरकण्ठयुगाश्रकम् ।
अधस्ताद्वीरकण्ठं स्यात्फलिकालक्षणं शृणु ॥ २० ॥

---

## फलिका ।

अथ वक्ष्ये विशेषेण फलिकानां तु लक्षणम् ।
त्रिदण्डं फलिकाव्यासं कन्यासार्धाधिकं समम् ॥ २१ ॥
चतुर्दण्डविशालं तु उत्तमा लम्भका भवेत् ।
अथवा फलकाव्यासं कुम्भकर्णे समं भवेत् ॥ २२ ॥
सर्वेषां फलकानां तु तुङ्गं पादोनदण्डकम् ।
तदुत्सेधं त्रिधा भज्य ऊर्ध्वं सो(तत्सं)न्धिरुच्यते ॥ २३ ॥
तथाथो(ऽधो)पेतमेकांशं तस्याधस्त्वम्बुजांशकम् ।
नागपत्रसमाकारमपेतोपादरूपकम् ॥ २४ ॥
सर्वेषां फलकानां तु उत्सेधार्धं युगांशकम् ।
फलकमेव कर्तव्यं तस्याधस्तात्खटं(घटं) कुरु ॥ २५ ॥
द्विदण्डं पादहीनं वा सार्धदण्डमथापि वा ।
सपाददण्डतुङ्गं वा घटोच्चं तु चतुर्विधम् ॥ २६ ॥
प्रियदर्शनं सौम्यं च चन्द्रकान्तं च श्रीकरम् ।
यथा क्रमेण नामानि कलशानां क्रमादितः ॥ २७ ॥
घटोच्चं पे(वै)नवांशेन हृद्भागे परिकल्पयेत् ।
वेदांशं कलशोत्सेधं कण्ठमेकांशमानतः ॥ २८ ॥
आस्योच्चमेकभागेन पद्ममेकेन कारयेत् ।
अधोऽनावृत्तमन्धेन हीनौ संकल्पयेद्बुधः ॥ २९ ॥
ऊर्ध्वोदयगतं कुर्यादनेन विधिना क्रमात् ।
एवमुच्चं समाख्यातं विष्कम्भमधुना शृणु ॥ ३० ॥

विष्कम्भः ।

पादव्याससमौ हीनौ तत्कण्ठस्यास्य विस्मृ(स्तृ)तम् ।
अस्य कण्ठविशेषेण कुम्भस्योपरि विस्मृ(स्तृ)तम् ॥ ३१ ॥
स्तम्भे व्याससमं प्रोक्तं विस्तारे तच्च कर्णयोः ।
तस्याधो लशुनं मूलात्कल्पयेत्कल्पवित्तमः ॥ ३२ ॥
अथवा बोधिकादीनामुदयं तु वदाम्यहम् ।
ऊर्णा(नां)शशरणोत्सेधं कृत्वाऽधो त्र्यंशकं व्रजेत् ॥ ३३ ॥
ऊर्ध्वभागं तु संग्राह्यं द्वात्रिंशत्यंशकं व्रजेत् ।
युगांशं बोधिकोत्सेधं वीरकण्ठं च तत्समम् ॥ ३४ ॥
भूतांशं फलकोत्सेधं मध्यमूलं शिवांशकम् ।
सोमे(समो)त्सेधं तु वेदांशं शिवांशं कण्ठमानकम् ॥ ३५ ॥
तदास्योदयमेकांशं पद्ममेकेन कारयेत् ।
वृत्तमन्धे(र्धे)न कर्तव्यं हीनं तत्सममुच्यते ॥ ३६ ॥
लशुनाऽब्जलतामुक्तं मालामानादि पूर्ववत् ।
स्तम्भभूषणमेवं स्याद्वेदिकालक्षणं ततः ॥ ३७ ॥

काश्यपशिल्पे फलकलक्षणविधानो नवमः पटलः ।

---

अथ दशमः पटलः ।

---

## वेदिकालक्षणम् ।

---

अथ वक्ष्ये विशेषेण वेदिकालक्षणं परम् ।
अधिष्ठानोपरिष्टात्तु स्तम्भमूले च कल्पयेत् ॥ १ ॥
प्रस्तारं सो(रस्यो)परिष्टात्तु कर्तव्या वेदिका द्विज ।
अध्यर्धदण्डमानं तु कन्यसा वेदिका मता ॥ २ ॥
द्विदण्डोदयमध्यं स्याच्छ्रेष्ठं तुङ्गं त्रिदण्डकम् ।
अथवाऽन्यप्रकारेण वेदिकोत्सेधमुच्यते ॥ ३ ॥
चरणोदयं तु षट्सप्तवसुभागविभाजते ।
एकांशं वेदिकामानं कार्यं श्रेष्ठमधोऽधमम् ॥ ४ ॥

एवं हि चरणानां तु मूले तु वेदिकोदयम् ।
ऊर्ध्वमभ्यङ्घ्रितुङ्गे तु सप्तभागविभाजिते ॥ ५ ॥
एकांशखण्डहर्म्याणां वेदिकोदयमिष्यते ।
त्रिचतुष्पञ्चभागं तु गलोत्सेधं द्विभाजिते ॥ ६ ॥
गलमुच्चतमेकांशं श्रेष्ठमध्याधमं तथा ।
अर्धोत्सेधांशमानं वा दण्डमूले तु वेदिका ॥ ७ ॥
षडंशे वेदिकोत्सेधं गुणांशं गलमानकम् ।
गलोर्ध्वे कम्पमेकांशमेकेनाब्जं प्रकल्पयेत् ॥ ८ ॥
तदूर्ध्वे कम्पमेकांशं कर्तव्यं द्विजसत्तम ।
सप्ताष्टांशे तु वेद्युच्चैर्वेदभूतं क्रमाद्गलम् ॥ ९ ॥
क(वं)(ण्ठं) पद्मं च कम्पं च प्रागिवैव प्रकल्पयेत् ।
कण्ठमानेन तन्मूले कम्पमेकेन कल्पयेत् ॥ १० ॥
शेषं कण्ठोदयं प्रोक्तं तत्कम्परहितं तु वा ।
अत्यर्धांशं तु वा पद्मं तुङ्गं द्व्यंशमथापि वा ॥ ११ ॥
पद्मशैलसुपद्माभा चित्रांशा वेदिकाऽथवा ।
सर्वेषां वेदिकानां तु गलमङ्घ्रिविभूषितम् ॥ १२ ॥
कुड्यस्तम्भसमव्यासान्नीत्रं वा वेदिकाङ्घ्रिका ।
प्ररोपरित(स्तरोपरि)वेदीनां वेशनं शृणु सुव्रत ॥ १३ ॥
गर्भभित्तित्रिभागैकमङ्घ्रिवेद्यङ्घ्रिवेशनम् ।
चतुर्भागैकभागं वा पञ्चभागैकरा(मा)भजेत् ॥ १४ ॥
एकांशं रहितं शेषं वेदिकायास्तु विस्तृतम् ।
युगांशं वेदिकाकारं नागरे प्रस्तरोपरि ॥ १५ ॥
द्राविडे वेसरैर्हर्म्यैर्वस्वश्रं वेदिकाकृति ।
अथवा वेसराहर्म्यवेदिकाग्रत एव वा ॥ १६ ॥
अनेकाश्रयताश्रे च गलाग्रं वेदिकाश्रया ।
वेदिकालक्षणं प्रोक्तं ततो जालकलक्षणम् ॥ १७ ॥

इति श्रीकाश्यपशिल्पे वेदिकालक्षणो दशमः पटलः ।

## अथैकादशः पटलः ।

---

### जालकलक्षणम् ।

---

अथ वक्ष्ये विशेषेण शृणु जालकलक्षणम् ।
पादवर्गगले चैव जालकस्थानमुच्यते ॥ १ ॥
प्रासादेषु महावास्तु अन्तरालैव मध्यमम् ।
पादात्पदं न कर्तव्यमनेन विधिना बुधः ॥ २ ॥
योजयेद्वेदिकोर्ध्वे तु जालकं तु द्विजोत्तमाः ।
वेदिका जालकार्थं न च्छेद्या सर्वविनाशनम् । ३ ॥
तद्यथा वेदिका जालं कार्यं न च्छेदयेत्तथा ।
द्विदण्डं कन्यसं व्यासं त्रिदण्डं मध्यमं भवेत् ॥ ४ ॥
चतुर्दण्डविशालं तु ह्युत्तमं परिकीर्तितम् ।
विस्तारसदृशोत्सेधमेकदण्डादिवर्धनात् ॥ ५ ॥
विस्तारद्विगुणं वाऽथ तावद्वै जालकोत्तमम् ।
येषु तुङ्गविशाले तु यदिष्टं तु परिग्रहेत् ॥ ६ ॥
स्तम्भव्यासार्धमानं तु घनं व्यासाङ्घ्रिकम्पयोः ।
विस्तारार्धा(र्धो)यनं(तं)रा(वा)तश्चिचतुर्थांशमेव वा ॥ ७ ॥
मध्यस्थं च[र] रन्ध्रं च वर्ज्यं जालकमाचरेत् ।
युग्मपादसमायुक्तमयुग्मं कम्पमुच्यते ॥ ८ ॥
गोनेत्रं हस्तिनेत्रं च नन्द्यावर्तं ऋजुक्रियम् ।
पुष्पकर्णं सकर्णं च जालकं षड्विधं भवेत् ॥ ९ ॥
दीर्घाश्रं कण्ठकच्छिद्रं गोनेत्रमिति संज्ञितम् ।
युगांशं कर्णकच्छिद्रं हस्तिनेत्रमुदाहृतम् ॥ १० ॥
पञ्चसूनं तु यच्छिद्रं प्रदक्षिणवशाकृति ।
नन्द्यावर्तस्य पुष्पाभं नन्द्यावर्तमिति स्मृतम् ॥ ११ ॥
भाग्नुकालौ स्तम्भकम्पौ द्वौ जालं तदृजुक्रियम् ।
पुष्पकण्ठं सकर्णाभं नन्द्यावर्तमिवाऽऽकृति ॥ १२ ॥

स्तम्भयोगं कवाटं च भित्तिमध्यबहिःस्थितम् ।
युग्मायुग्मं कवाटं(टं)वा घाटनोद्घाटनक्षमम् ॥ १३ ॥
जालकं तु सभादीनां पदतोर्धे(ऽर्धे)न कल्पयेत् ।
लोहद्रुमफलैर्दिव्यैर्वेष्टकाभित्तिजालकम् ॥ १४ ॥
यत्रोचितं तु यद्द्रव्यं तेन तत्रैव योजयेत् ।
जालकं त्वेवमाख्यातं ततस्तोरणलक्षणम् ॥ १५ ॥

इति काश्यपशिल्पे जालकविधानमेकादशः पटलः ।

---

अथ द्वादशः पटलः ।

---

## तोरणलक्षणम् ।

---

अथ वक्ष्ये विशेषेण तोरणानां च लक्षणम् ।
पादोदये दशांशे तु सप्तांशं चरणोदयम् ॥ १ ॥
शेषं त्वनलभागं तु झषमानमुदाहृतम् ।
नवांशे पादतुङ्गं तु षडंशं चरणोदयम् ॥ २ ॥
शेषं झषोदयं ख्यातमष्टांशे चाङ्घ्रितुङ्गके ।
पञ्चांशं चरणोत्सेधं गुणांशं कम्पतुङ्गकम् ॥ ३ ॥
तुङ्गं वा विपुलं वाऽपि देवभूतरसाङ्घ्रिकम् ।
तोरणस्य तु पादानां व्यासमेवं चतुर्विधम् ॥ ४ ॥
प्रासादमण्डपादीनां मध्यभागे तु तोरणम् ।
अनेन विधिना विप्र कर्तव्यं कुड्यमानके ॥ ५ ॥
पत्राख्यं तोरणमेकं द्वितीयं करतोरणम् ।
तृतीयं चित्रसंज्ञं तु त्रिविधा तोरणाकृतिः ॥ ६ ॥
अर्धचन्द्रमिवाऽऽकारं पत्रराजिविराजितम् ।
पत्रतोरणमाख्यातं ततो मकरमुच्यते ॥ ७ ॥
पञ्चवक्त्रसमायुक्तं पार्श्वयोर्मकरास्यकम् ।
मध्ये पुष्पसंयुक्तं नानाफललताञ्चितम् ॥ ८ ॥

नानालंकारसंयुक्तं वृत्तं मकरतोरणम् ।
तदेव पार्श्वयोर्मध्ये पुरीमस्य द्वयोरपि ॥ ९ ॥
नक्रतुण्डं प्रकर्तव्यं भूतविद्याधरास्तथा ।
सिंहव्यालकहंसाद्यैर्बलाग्रन्मुक्तमादकैः ॥ १० ॥
अन्यैश्च विविधैश्छत्रै रत्नसंघैश्च भूषयेत् ।
चित्रतोरणमेवं स्यात्प्रोच्यते तोरणत्रयम् ॥ ११ ॥
तोरणं चा(णान्य)न्तराऽधस्तात्प्रयोज्यानि विचक्षणैः ।
... .... .... पार्श्वयोर्विकरण्डसमन्वितम् ॥ १२ ॥
बोधिकाराहितं यत्तत् स्तम्भं तु गलता स्मृता ।
स्तम्भतोरणवन्मूर्ध्नि कर्तव्यं तोरणद्वयम् ।
एवं तान्निविधं नीत्वा द्विज कुम्भलतोच्यते ॥ १३ ॥

इति काश्यपशिल्पे तोरणकुम्भलता (लक्षणं) द्वादशः पटलः ।

---

अथ त्रयोदशः पटलः ।

---

वृत्तस्फाटितलक्षणम् ।

---

अथ वक्ष्ये विशेषेण वृत्तस्फाटितलक्षणम् ।
षडङ्गुलं समारभ्य द्विद्वयङ्गुलविवर्धनात् ॥ १ ॥
कलाङ्गु(ङ्गु)लावधिर्या(र्धि या)वत् तावद्व्यासं तु षड्विधम् ।
विस्तारार्धं तु तन्नीव्रं द्वात्रिंशद्द्वित्रिभागकम् ॥ २ ॥
वृत्ताकारसमं तच्च तोरणाङ्घ्रितु(त्र)दायु(य)तम् ।
सकंधरं तदूर्ध्वे तु शुकनासान्वितं तु वा ॥ ३ ॥
कर्णकूटाकृतिं वाऽथ वृत्ताकारं प्रकल्पयेत् ।
स्तम्भोत्सेधयुगांशे तु द्विभागं चरणोदयम् ॥ ४ ॥
प्रस्तरोदयमेकांशं शुकनास्युदयांशकम् ।
तदेव कूटमानं तु तत्तदुक्तवशान्नयेत् ॥ ५ ॥
अथवा तरमंच स्य प्रोक्तमार्गेण वा कुरु ।
वृत्तस्फाटितमेवं हि लतामण्डलमण्डितम् ॥ ६ ॥

स्तम्भाद्यं तोरणं चैव तथा कुम्भलता द्विज ।
वृत्ताख्यं स्फाटितं चैव हारं तारेषु कल्पयेत् ॥ ७ ॥
स्तम्भान्तरेव कर्तव्यं हर्म्यादीनां विशेषतः ॥ ८ ॥

इति काश्यपशिल्पे वृत्तस्फाटितलक्षणं त्रयोदशः पटलः ।

---

अथ चतुर्दशः पटलः ।

---

स्तंभतोरणम् ।

---

अथ वक्ष्ये विशेषेण स्तंभतोरणलक्षणम् ।
पादोच्चं दश्यरा(शधा)भज्य शुद्धद्वारं नवांशकम् ॥ १ ॥
चरणं नवधा भज्य अष्टांशं द्वारमानकम् ।
अथवाऽङ्घ्रिस्तु तुङ्गं तु वसुभागविभाजिते ॥ २ ॥
सप्तमं द्वारमानं तु रसभागविभाजिते ।
सार्धपञ्चांशमूर्ध्वे तु भवंगस्योच्च(द)यं भवेत् ॥ ३ ॥
पदं गच्छ(तुङ्गोच्चा)मल(ध)स्तात्तु सार्धद्विभागमुच्यते ।
शुद्धद्वारे तारार्धांशं शुद्धद्वारस्य विस्तृतम् ॥ ४ ॥
एकद्वित्रिचतुष्पञ्चषट्सप्ताष्टनवाङ्गुलम् ।
तुङ्गार्धादधिकं हीनं तारमेकोनविंशतिः ॥ ५ ॥
भेदमेवं समाख्यातं द्वारतुङ्गमयं भवेत् ।
सर्वेषामपि हर्म्याणां द्वारं मध्ये तु योजयेत् ॥ ६ ॥
पादविष्कम्भमानं वा सपादं सार्धमेव वा ।
द्वारयोगस्य विस्तारं तस्यार्धं ख(घ)नमुच्यते ॥ ७ ॥
साद(ष्ट)सार्धख(घ)नं वाऽथ त्रिपादं वाऽथ तद्घनम् ।
योगतुङ्गं तु वेदांशमेकाग्रांशमथोत्तमम् ॥ ८ ॥
गुणांशमूर्ध्वगं ख्यातं बाह्याब्जक्षेपणान्वितम् ।
बाह्येऽब्जक्षेपणोपेतं भूतारं तदधो भवेत् ॥ ९ ॥
पतङ्गतारयोगस्य तुल्यमब्जविहीनकम् ।
भुवनं च पतङ्गं च मध्यस्थवलयान्वितम् ॥ १० ॥

ताम्रजौ वाऽऽयसौ वाऽथ चकमौ कीलवर्द्धितौ ।
तद्द्विस्ताग्रिमभागैकं शिखायोगप्रवेशितौ ॥ ११ ॥
शैलजं चेद्भुजंगादियोगभूये शिलान्वितौ ।
भुजङ्गपतङ्ग्योरग्रौ छिद्रयोर्वेशनान्वितौ ॥ १२ ॥
एवं दृढीकृतौ पश्चाद्योगावस्थानमाचरेत् ।
सुनक्षत्रे शुभे वारे शुभहोरामुहूर्तके ॥ १३ ॥
योगे संस्थापयेद्विप्र शान्तिहोमं परं चरेत् ।
भित्तिव्यासे तु भान्वंशे बाह्यात्पञ्चावसानकम् ॥ १४ ॥
अभ्यन्तरं तु सप्तांशं सीमा योगस्य मध्यमम् ।
तद्बाह्येऽभ्यन्तरं चैव योगव्यासोभयाश्रितम् ॥ १५ ॥
सर्वालंकारसंयुक्तं ... ... ... .... ... ।
योगं वा पञ्चषट्सप्तभागे द्वौ तोरणाग्रकम् ॥ १६ ॥
शेषं पादोदयं ख्यातमेवं वै त्रिविधं भवेत् ।
युगाश्रं वसुकोणं वा वृत्तं वा तोरणद्वयम् ॥ १७ ॥
कुम्भमण्डादि(?)व्य(संयुक्तं) पोतिकासहितं तथा ।
पोतिकारहितं वाऽथ वीरकाण्डसमन्वितम् ॥ १८ ॥
कुड्यस्तम्भविशालार्धं त्रिपादं वा समं तु वा ।
तोरणाङ्घ्रिविशालं तु प्रोच्यते द्विजसत्तम ॥ १९ ॥
उत्तरं वाजनं साम्(ब्ज)क्षेपणं क्षुद्रवाजनम् ।
यथा क्रमेण संकल्प्य अनेन विधिना बुध ॥ २० ॥
तोरणाङ्घ्रिविशालं वा त्रिपा(दं) वोत्तरोदयम् ।
तदर्धं वाजनोच्चं तु तस्यार्धं गलनामकम् ॥ २१ ॥
गलार्धक्षेपणं ख्यातं तस्यार्धं क्षुद्रवाजनम् ।
उत्तरं पोतिकोर्ध्वे च वीरकाण्डं तु वा भवेत् ॥ २२ ॥
उत्संधितानताग्रं तु कुर्यान्मकरविष्टरम् ।
तोरणाग्रविशालं तु कुड्यस्तम्भोऽथ आर्धकम् ॥ २३ ॥
कुड्यस्तम्भस्य तारान्तर्व्यासं वा तोरणाग्रकम् ।
स्वाङ्घ्रिनेत्रावसानं वा तस्माद्दण्डाधिकं तु वा ॥ २४ ॥
एवं चतुर्विधं ख्यातं तोरणाग्रविशालकम् ।

कुड्यतोरणमाख्यातं द्वारतोरणमुच्यते ॥ २५ ॥
द्वारतुल्योन्नतव्यासं तोरणाङ्घ्र्यन्तरं समम् ।
उत्तरं वाजनं चाऽब्जक्षेपणं चाष्टमङ्गलम् ॥ २६ ॥
फलकं पत्रवक्त्राढ्यं प्रागुक्तविधिना कुरु ।
वक्त्राढ्यं मकराढ्यं वा चित्रतोरणमेव वा ॥ २७ ॥
मध्यशीर्षे शूलसंयुक्तं पार्श्वयोश्च समन्वितम् ।
दर्पणं पूर्णकुम्भं च वृषभं युग्मचामरम् ॥ २८ ॥
श्रीवत्सं स्वस्तिकं शङ्खं दीपं ह्येवाष्टमङ्गलम् ।
श्रीवत्सं मध्यमे कुर्याच्छेषांशं तस्य पार्श्वयोः ॥ २९ ॥
लोहैर्दारुशिलान्तर्वा कर्तव्यं द्वारतोरणम् ।
द्वारतोरणमेवं हि स्तम्भतोरणमुच्यते ॥ ३० ॥
पादोच्चं तु त्रिधा भज्य द्विभागं चरणोदयम् ।
पादं सर्वाङ्गसंयुक्तं पोतिकारहितं कुरु ॥ ३१ ॥
उत्तरं वाजनाब्जं च क्षेपणं निम्नवाजनम् ।
तदूर्ध्वं च(ञ्च)पकर्णं तु नानापत्रैर्विचित्रितम् ॥ ३२ ॥
तोरणं मकराढ्यं(व्यं)तु मृणाल्याद्वि(ऽन्वि)तकंधरम् ।
सर्वालंकारसंयुक्तमेतत्स्यात्स्तम्भतोरणम् ॥ ३३ ॥
पादान्तरे हरायां वा कर्णप्रासादमध्यमे ।
शालामध्यान्तराले वा कर्तव्यं सर्वधामसु ॥ ३४ ॥
स्तम्भतोरणमाख्यातं शृणु कुम्भलताविधिम् ॥ ३५ ॥

इति काश्यपशिल्पे स्तम्भतोरणविधिश्चतुर्दशः पटलः ।

---

अथ पञ्चदशः पटलः ।

---

## कुम्भस्थललक्षणम् ।

---

स्तम्भमूले तु मध्यूर्ध्वे पद्मासनं प्रकल्पयेत् ।
पादव्यासपि समं तुङ्गं सपादं पद्मविस्तृतम् ॥ १ ॥

पद्मोर्ध्वं वसुधा भज्य कम्पमेकांशमेव वा ।
अथो पद्मं गुणांशं तु एकांशं गलमुच्यते ॥ २ ॥
ऊर्ध्वमब्जद्विभागे तु कम्पमेकेन कारयेत् ।
तदूर्ध्वे कुम्भतुङ्गं तु पद्मस्योच्चं समन्वियात् ॥ ३ ॥
तत्तुङ्गं द्विगुणं कुम्भव्यासमित्यभिधीयते ।
कुम्भास्ये स्तम्भनिर्यूहं वलिमण्डलसंयुतम् ॥ ४ ॥
कुम्भमण्डादिसंयुक्तं वीरकाण्डविहीनकम् ।
फलकोपरि पद्मं तु कुम्भमानेन कल्पयेत् ॥ ५ ॥
कुम्भकुम्भलता ह्येता ह्यन्यथा वक्ष्यते पुनः ।
तदेवोत्संधिकोर्ध्वे तु वीरकाण्डसमन्वितम् ॥ ६ ॥
पोतिकारहितं यत्नात्स्तम्भकुम्भलता स्मृता ।
स्तम्भतोरणवन्मूर्ध्नि कर्तव्यं तोरणालयम् ॥ ७ ॥
एवं त्रिविधं चित्वा तूच्यते लुम्भलता द्विज ॥ ८ ॥

इति काश्यपशिल्पे कुम्भस्थललक्षणं पञ्चदशः पटलः ।

---

अथ षोडशः पटलः ।

---

वृत्तस्फुटितम् ।

---

अथ वक्ष्ये विशेषेण वृत्तस्फुटितलक्षणम् ।
षडङ्गुलं समारभ्य द्विद्व्यङ्गुलविवर्धनात् ॥ १ ॥
कलाङ्गुलविधिर्या(र्धि या )वत्तावद्व्यासं तु षड्विधम् ।
विस्तारार्धं तु तन्नीत्रं द्वित्र्यांशं च भागिकम् ॥ २ ॥
वृत्ताकारसमं चान्तस्तोरणाङ्घ्रिवदायतम् ।
कन्धरं तु तदूर्ध्वे तु क्षू(शू)करास्यान्वितं तु वा ॥ ३ ॥
कर्णकूटाकृतिर्वाऽथ वृत्ताकारं प्रकल्पयेत् ।
स्तम्भोत्सेधयुगांशे तु द्विभागं चरणोदयम् ॥ ४ ॥
प्रस्तरोदयमेकांशं शुकनास्युदयांशकम् ।
तदेव कूटमानं तु तत्तदुक्तवशान्नयेत् ॥ ५ ॥

अथवा तरमश्वस्य प्रोक्तमार्गेण वा कुरु।
वृत्तस्फुटितमेवं हि लतामण्डलमण्डितम् ॥ ६ ॥
स्तम्भाख्यतोरणं चैव तथा कुम्भलता द्विज।
वृत्ताख्यं स्फुटितं चैव हारं तारेषु कल्पयेत् ॥ ७ ॥
स्तम्भान्तरेव कर्तव्यं हर्म्यादीनां विशेषतः ॥ ८ ॥

इति काश्यपशिल्पे वृत्तस्फुटितलक्षणं षोडशः पटलः।

---

अथ सप्तदशः पटलः।

---

द्वारविन्यासः।

---

अथ वक्ष्ये विशेषेण द्वारविन्यासलक्षणम्।
पादोर्ध्वं दशधा भज्य शुद्धद्वारनवांशकम् ॥ १ ॥
चरणांशनवाङ्घ्रे तु तुङ्गं तु वसुभाजिते।
सप्तांशं द्वारमानं तु रसभागविभाजिते ॥ २ ॥
सार्धहर्म्यांशदू(मू)र्ध्वे तु भवङ्गस्योच्छ्रयं भवेत्।
स्तम्भोगश्च(ल)मधस्तात्तु सार्धद्विभागमुच्यते ॥ ३ ॥
शुद्धद्वारे तु[तु]ङ्गार्थे शुद्धद्वारस्य विस्तृतम्।
एकद्वित्रिचतुष्पञ्चषट्सप्ताष्टनवाङ्गुलम् ॥ ४ ॥
तुङ्गार्धादधिकं हीनं तारमेकोनविंशतिः।
भेदमेवं समाख्यातं द्वारतुङ्गं त्रिधा भवेत् ॥ ५ ॥
सर्वेषामपि हर्म्याणां द्वारमध्ये तु योजयेत्।
पादविष्कम्भमानं वा सपादं सार्धमेव वा ॥ ६ ॥
द्वारयोगस्य विस्तारं तस्यार्धं घनमुच्यते।
साष्टसार्धघनं वाऽथ त्रिपादं वाऽथ तद्घनम् ॥ ७ ॥
योगतुङ्गं तु वेदांशे त्वेकांशाश्मयोगतः।
गुणांशादूर्ध्वगं ख्यातं बाह्याब्जक्षेपणान्वितम् ॥ ८ ॥
बाह्याब्जक्षेपणोपेतं भुवहातंचयो भवेत्।
पतङ्गतारयोगस्य तुल्याब्जं च विहीनकम् ॥ ९ ॥

भुवङ्गं च पतङ्गं च मध्यस्थवलयान्वितम् ।
ताम्रजौ वाऽऽयसौ वाऽथ वलयौ कीलकान्वितौ ॥ १० ॥
तद्विस्तारत्रिभागैकं शिखायोगप्रवेशिकौ ।
शैलजं चेद्भुवङ्गाग्रदि योगाभूये शिखान्वितौ ॥ ११ ॥
भुवङ्गपतयोरग्रौ छिद्रयोर्वेशनान्वितौ ।
एवं दृढीकृतौ पश्चाद्योगावस्थानमाचरेत् ॥ १२ ॥
सुनक्षत्रे शुभे वारे शुभहोरामुहूर्तके ।
योगे संस्थापयेद्विप्र शान्तिहोमपुरःसरम् ॥ १३ ॥
भित्तिन्यासे तु भान्वंशे बाह्यालयं चा(त्पश्चा)वसानकम् ।
अभ्यन्तरं तु सप्तांशं सीमायोमस्य मध्यमम् ॥ १४ ॥
वि(त)द्बाह्येऽभ्यन्तरं चैव योगन्यासोभयाश्रितम् ।
सर्वालंकारसंयुक्तं योमसाप्य(सीमा)दृढीकृतम् ॥ १५ ॥
दक्षिणे तु कवाटे तु योजयेद्द्वारपट्टिकाम् ।
त्रिचतुष्पञ्चमात्रं वा द्वारपट्टिकविस्तृतम् ॥ १६ ॥
तत्त्रिभागैकभागं तु तस्य नीव्रमुदाहृतम् ।
तन्नीव्रात्द्विगुणं ख्यातं नीव्रं वैतत्कवाटयोः ॥ १७ ॥
नीव्रभाग्यां च मध्ये तु द्वारपट्टिकपार्श्वयोः ।
लोहजं वलयोपेतं एतानिकीलबन्धनम् ॥ १८ ॥
लोहजं दारुजं वाऽथ बाह्याभ्यन्तरगं तथा ।
तासां त्रिमङ्गलं तावं(नीव्रं)ताराधंघनसंयुतम् ॥ १९ ॥
बद्ध्वा कवाटे योमौद्धौ दारुलोहैर्दृढीकृतम् ।
अर्गलादिसमोपेतं घटनोद्घाटनक्षमम् ॥ २० ॥
परेषां घटयन्तत्रमप्यसत्त्व विमाभ्वरेत् ।
प्रासादे मण्डपे चैव गोपुरे चैवमाचरेत् ॥ २१ ॥
द्वारमेवं समाख्यातं कम्पद्वारमय(तः)शृणु ॥ २२ ॥

इति काश्यपशिल्पे द्वारविन्यासलक्षणं सप्तदशः पटलः ॥

अथाष्टादशः पटलः ।

कम्पद्वारलक्षणम् ।

अथ वक्ष्ये विशेषेण कम्पद्वारविधिं परम् ।
प्रासादमण्डपादीनां चतुर्दिक्षु विदिक्षु वा ॥ १ ॥
तयोर्मध्यान्तराले वा व्योमाभीष्टं तु यत्र वै ।
तत्रैव कल्पयेत्सम्यक्कम्पद्वारं द्विजोत्तम ॥ २ ॥
वस्त्रद्वीतकृतं पत्तिव्यासयुक्तं विशालकम् ।
स्थलादुत्तरसीमान्तं कम्पद्वारोदयं भवेत् ॥ ३ ॥
भुवङ्गं च पतङ्गं च योगं प्रागुत्तनं(क्तकं)घनम् ।
कृत्वा दृढीकृतं बद्ध्वा योजयेदन्तरा पुरा ॥ ४ ॥
योगव्यासघनं दीर्घं य(र्घमा)यामाङ्घ्रिस्त(ङ्घ्रि-त)था कुरु ।
मूलाग्रयोजिकोपेतं तरङ्गाङ्घ्रि प्रकल्पयेत् ॥ ५ ॥
भुवङ्गं च पतङ्गं च छिद्रे युञ्ज्याद्दृढीकृतम् ।
चतुष्षडष्टसंख्यं वा दश द्वादश एव वा ॥ ६ ॥
मनुषोडशसंख्या वा कल्पयेदन्तराङ्घ्रिया ।
अन्तराद्यन्तरा प्रत्यग्गमागमाक्षमं विना ॥ ७ ॥
अन्तराङ्घ्रीन्प्रयुञ्जीयात्स्थापयेद्द्वारयोगवत् ।
योजयेत्तु कवाटादि योमा(व्योमे)प्रत्येकमेव तु ॥ ८ ॥
कवाटे द्विव्योमग्रासत्रिव्योमग्रास एव वा ।
कल्पयेत्सुदृढं द्वारं स्वचलं हस्तिनाऽपि वा ॥ ९ ॥
कम्पद्वारं समाख्यातं प्रस्तरं तु ततः शृणु ॥ १० ॥
इति काश्यपशिल्पे कम्पद्वारलक्षणमष्टादशः पटलः ।

अथैकोनविंशः पटलः ।

प्रस्तरलक्षणम् ।

अथ वक्ष्ये विशेषेण प्रस्तरस्य तु लक्षणम् ।
स्तम्भार्धमञ्चमानं तु आर्तो(अर्धो)त्सेधांशमेव वा ॥ १ ॥

तदुच्चक्येव(स्यैक)विंशांशे कृत्वा गुणांशमुत्तमम् ।
वाजनक्ये(स्यै)कभागेन भूतमालोन्नतं त्रिभिः ॥ २ ॥
भूतमालोपरिष्टात्तु वाजनक्ये(स्यै)कभागया ॥
सप्तांशं तु कपोतोच्चमालिङ्गस्यैकभागया ॥ ३ ॥
अंशेनान्तरितं कुर्यात्प्रत्युत्सेधं गुणांशकम् ।
वाजनत्येक(स्यै)कभागेन कुर्याद्वै चान्यभेदतः ॥ ४ ॥
तुङ्गमेकोनविंशांशं कृत्वोत्तारात्रि(त्रि)भागया ।
भागेन वाजनं कुर्यादभ्यंशे वलभी भवेत् ॥ ५ ॥
वाजनत्ये(स्यै)कभागेन कपोतोच्चं रसांशकम् ।
आलिङ्गमंशमंशेनान्तरितं तु प्रकल्पयेत् ॥ ६ ॥
प्रत्युत्सेधद्विभागेन वाजनत्ये(स्यै)कभागिना ।
उत्सेधश्चैवमाख्यातस्त्वङ्गजातमथोच्यते ॥ ७ ॥
स्तम्भात्तु पोतिकानीव्रं बोधिकादुत्तरं तथा ।
वाजनस्य तु निष्क्रान्तमुत्तरं द्वा(वा)जनोन्नतम् ॥ ८ ॥
वाजनाद्वलभीनीव्रं वलभीतुङ्गसदृशम् ।
त्रिपादं वा तदर्धं वा प्राग्वाजनातिविस्तृतम् ॥ ९ ॥
वाजनानां कपोतस्य नीव्रं द्वो(र्ध्यो)मसमानकम् ।
उपानसीवसानं वा जगदन्तमथापि वा ॥ १० ॥
वाजनादर्धदण्डं वा दण्डं सार्धद्विदण्डकम् ।
वाजनात्तु कपोतस्य नीव्रं चालम्बनं समम् ॥ ११ ॥
कपोतं गोपानसहितं गोपानरहितं तु वा ।
पादबाह्यसमं प्रोक्तं कुलिङ्गप्रतिरुच्यते ॥ १२ ॥
आलिङ्गान्तरितं वेशं नीव्रं चोत्सेधसदृशम् ।
वाजनोश्च(च्च)समं प्रोक्तं वाजनस्य तु निर्गमम् ॥ १३
दण्डत्रिपादमर्धं वा चोत्तराग्रस्य नीव्रकम् ।
उत्तरस्यानुकूलं तु वाजने नीव्रवेशनम् ॥ १४ ॥
वलभीवृतसं(हं)साद्यैर्भूपर्यैर्दुत्तरोपरि ।
नानापत्रलताद्यैस्तु कपोतो(तं)कर्णपालिकम् ॥ १५ ॥

प्रत्यग्रमकरीबन्धप्रतिसिंहादिभूषितम् ।
एवं प्रस्तरवर्गं तु प्रोच्यते तद्द्विजोत्तम ॥ १६ ॥

इति काश्यपशिल्पे प्रस्तरलक्षणमेकोनविंशः पटलः ।

---

अथ विंशः पटलः ।

---

गलभूषणम् ।

---

अथ वक्ष्ये विशेषेण गलभूषणलक्षणम् ।
ऊर्ध्वभामोश्च(गोच्च)तुङ्गं तु गलमानमुदाहृतम् ॥ १ ॥
आर्तो(अर्धो)त्सेधांशमानं वा गलमानमुदाहृतम् ।
तदुच्चत्रिचतुष्पञ्च शेषं वा वेदिकोदयम् ॥ २ ॥
शेषं गलोदयं ख्यातं तमशेषं गलोदयम् ।
वेदिकायास्तु विस्तारं चतुष्पञ्चषडंशके ॥ ३ ॥
त्रिचतुष्पञ्चभागं तु गलव्यासं यथाक्रमम् ।
अङ्घ्रेर्मध्यकुड्यप्रवेशं स्यात्तद्बध्यं गलवेशनम् ॥ ४ ॥
त्रिपादं वा तदर्धं वा वेद्य(ध्य)ङ्घ्रेर्गलवेशनम् ।
एवं त्वनेकभेदेषु कर्तुरिच्छावशान्नयेत् ॥ ५ ॥
वेदाश्रं नागरे कण्ठं वस्वश्रं द्राविडे गलम् ।
वृत्तं तु वेसरे हर्म्ये गलमानकुलं नयेत् ॥ ६ ॥
दिशि भद्रसमायुक्तं नासिकानकुलाङ्घ्रिकम् ।
भानुद्व्यंशे गलोत्सेधैः कलांशं तु गलोदयम् ॥ ७ ॥
उत्तरोच्चं गुणांशं तु वाजनं गलभागया ।
आद्व्यंशं बहुभिर्मानं व्योमांशं वाजनोदयम् ॥ ८ ॥
उत्तरार्धगलाग्रीवं वाजनादीनि पूर्ववत् ।
अथवा भानुभागे तु गलोदयमुदाहृतम् ॥ ९ ॥
उत्तरोच्चं गुणांशं तु शिवांशं वाजनोदयम् ।
तदर्धे मुष्टिबन्धांश्च मध्यध्यांशमुदाहृतम् ॥ १० ॥

मृणाल्युच्चं गुणांशं तु एकांशं पट्टिका भवेत् ।
सार्धांशं दण्डिकोच्चं तु व्योमांशं वर्णपट्टिका ॥ ११ ॥
गोपानं कल्पयेदूर्ध्वे उपारोहणमेव वा ।
वाजनादीनि निष्क्रान्तं तत्तदुच्चसमं भवेत् ॥ १२ ॥
एवं गलोन्नतव्यासम(सं सा)लंकारं च कीर्तितम् ॥ १३ ॥

इति काश्यपशिल्पे गलविधानं विंशः पटलः ।

अथैकविंशः पटलः ।

## शिखरलक्षणम् ।

अथ वक्ष्ये विशेषेण शिखरस्य तु लक्षणम् ।
ऊर्ध्वभूस्तम्भतुङ्गस्य सदृशं शिखरोदयम् ॥ १ ॥
आर्तो(अर्धो)त्सेधांशमानं वा तुङ्गं वै शिखरस्य तु ।
यदि विस्तारतुल्यं वा शिखरे ग्रो(वो)त्तनीव्रकम् ॥ २ ॥
वलभीवाजनानीव्रं दण्डं वाध्याध्य(ऽध्यर्ध)एव वा ।
द्विदण्डंव....नीव्रं चाऽऽलम्बनं समम् ॥ ३ ॥
तन्नीव्रसदृशं तुङ्गं कपोतं वलभीजनात् ।
शिरस्तारं कपोतोर्ध्वं वलभीवाजनैः समम् ॥ ४ ॥
शिखरे मध्यविस्तारं कम्पो(म्प)निष्क्रान्तवा(म)दृशम् ।
समं त्रिपादमर्धं वा तारमेवं चतुर्विधम् ॥ ५ ॥
तत्र तारं च पञ्चांशे सं(ऽयं)शं फलिकविस्तृतम् ।
शिखरे बलिकस्थानं भूतांशेषु शिरोदयम् ॥ ६ ॥
वेदभागावसाने तु फलिकामण्डलाकृतिम् ।
त्रिचतुष्पञ्चमात्रं वा बलिकं मण्डलं तथा ॥ ७ ॥
तत्तारे तु चतुर्थांशे तर्ज(र्शेऽन्तर्म)ण्डलघनं भवेत् ।
युग्मं वा युग्मसंख्या वा परितः कल्पयेत्समम् ॥ ८ ॥
वलिकानामधश्चोर्ध्वे वेत्रे तदध(स्यार्ध)मानतः ।
बालिकव्यासभूतांशे युग्मांशं पद्मविस्तृतम् ॥ ९ ॥

शिखरस्य तु मानान्तं पद्मतुङ्गमुदाहृतम्।
पद्मनारत्रिभागैकं कुम्भस्याधोऽवलम्बकम्॥ १०॥
बलम्बस्य त्रिभागैकं कुम्भस्योपरि कन्धरम्।
कन्धरं त्रिगुणं पालि तत्त्रिभागे तु कुड्मलम्॥ ११॥
पालिनालविशालं तु कंधरादिषु बृंहितम्।
बलिकान्तं शिरोमध्यादानुपूर्व्यं कृशं कुरु॥ १२॥
मध्याद्वाजनतुलयान्तं क्रमेण कृशतां कुरु।
तस्मात्कपोतनीव्रान्तं क्रमेणैव बृहद्घनम्॥ १३॥
शिखरस्य तु तुङ्गार्धं पद्मार्धे स्तूपि तुङ्गकम्।
द्वाविंशति भवेदुच्चं पद्ममन्यन्ध(द्ममध्यर्ध)भागया॥ १४॥
कम्पमर्धांशमित्युक्तं गलमर्धांशमानतः।
तत्समं चोर्ध्वकम्पं तु पद्ममंशेन कल्पयेत्॥ १५॥
भूतभागं घटोत्सेधं कम्पमर्धांशमानतः।
पद्ममंशेन कर्तव्यं कम्पमध्यांशमानतः॥ १६॥
पञ्चांशं पालिकानां तु द्व्यंशं कम्पं तु मु(सु)च्यते।
पद्ममंशेन कर्तव्यं पालिकोच्चं तु भागया॥ १७॥
अर्धेन पद्ममर्धेन पद्मशेषं तु कुड्मक(ल)म्।
शिखराकृतिवत्कुम्भं फलिकाकुड्मलं तथा॥ १८॥
नागरे चतुरश्रं तद्वस्त्रश्रं द्राविडे शिरः।
वृत्तं वेसरहर्म्ये तु शिरसो वर्तनं क्रमात्॥ १९॥
नानाप(त्रि)लताभिस्तु शिखरं तु सुभूषयेत्।
लक्षणं शिखरस्यैवं नासिकालक्षणं शृणु॥ २०॥

इति कश्यपशिल्पे शिखरलक्षणमेकविंशः पटलः।

---

अथ द्वाविंशः पटलः।

---

## नासिकालक्षणम्।

---

अथ वक्ष्ये विशेषेण नासिकालक्षणं परम्।
ललाटनासिकाख्यातं शिखरे तारसदृशम्॥ १॥

शिखरस्य तु विस्तारं त्रिचतुष्पञ्चभागया ।
क्रमान्नासाविशालांशमुत्तमाधममध्यया ॥ २ ॥
महानासी तु विख्याता त्रिविधा कय(सा)प्रकीर्तिता ।
समं त्रिपादमर्धं वा शिखरे नासिनीक्रमम् ॥ ३ ॥
तत्तारत्रिचतुर्थांशहीनं शेषोदयं भवेत् ।
नासिकातुङ्गमाख्यातं तत्त्व(द)र्धोच्चमथापि वा ॥ ४ ॥
शक्तिध्वजतदूर्ध्वेन असितुङ्गार्ध एव वा ।
त्रिपादं वा त्रिभागैकं भागं वाऽथ तदुन्नतम् ॥ ५ ॥
तच्छक्तिध्वजतुङ्गं तु गुणभागविभाजिते ।
द्विभागं किंनरीवृत्तं तच्छेषं गलमानकम् ॥ ६ ॥
दण्डं तद्गलसारं स्याद्द्विगुणं किंनरीमुखम् ।
शक्तिध्वजोपरिष्ठं तु पत्रं बाधससूकलम् ॥ ७ ॥
किंनरीवक्त्रतुङ्गं स्यात्समं शूलोदयं भवेत् ।
पत्रं चोक्तेन मानेन तथा सौन्दर्यमाचरेत् ॥ ८ ॥
विस्तारमुखपट्टयस्तु दण्डं वाक्यर्थं (नास्यर्ध) एव वा ।
वल्लिमण्डलछत्राद्यैर्भूषयेमुन्खपट्टिकाम् ॥ ९ ॥
मुखपट्टयवशेषान्तं तद्वा गाढमुदाहृतम् ।
शतस्थिततपट्टया(ट्टी)भ्यां त्रिनालयप्रतिभूषितम् ॥ १० ॥
शूलाभं वा स्थलाभं वा सव्यालं वा सनाटकम् ।
मालिकाकूटकोष्ठादिमण्डितं वा विमानयेत् ॥ ११ ॥
चित्रचित्राख्यमकरैस्तोरणाख्यमथापि वा ।
तोरणाभ्यन्तरे लक्ष्मीः साभिषेकाम्बुनासिका ॥ १२ ॥
नानाविधैस्तथाऽन्यैर्वा नासिकार्धं तु मण्डयेत् ।
सभद्रं तु महानासिपादं सर्वाङ्गसंयुक्तम् ॥ १३ ॥
उत्तरं वाजनाब्जं च क्षेपणं नासिका तथा ।
कल्पयित्वा विशेषेण कण्ठो ता(ण्ठस्ता)रादिमानतः ॥ १४ ॥
ऊर्ध्वस्तम्भविशालं वा त्रिशालं वाऽर्ध एव वा ।
नासिकास्तम्भविस्तारं कर्णोच्चं तु तदुन्नतम् ॥ १५ ॥
स्वस्त्रश्रं वाऽथ वृत्तं वा युगाश्रं वा तदाकृति ।
नासिकायास्तु विस्तारं द्विदण्डं वा त्रिदण्डकम् ॥ १६ ॥

हितं शेषविशालं स्यान्नास्याङ्घ्रि बाह्यसीमकम् ।
नासिकाङ्घ्रिद्वये मध्ये तन्मूर्तिस्थापनं कुरु ॥ १७ ॥
महानासमिदं प्रोक्तं क्षुद्रनासविधिं शृणु ।
सार्धदण्डं द्विदण्डं वा त्रिदण्डं वाऽथ विस्तृतम् ॥ १८ ॥
तत्तारत्रिचतुर्थांशं हीनं शेषोदयं भवेत् ।
कपोतालम्बनात्क्षुद्रनागोच्चं तु स कल्पयेत् ॥ १९ ॥
प्रतिवाजनसीमान्तं तस्य शक्तिध्वजोन्नतम् ।
तदुच्चं तु त्रिधा भज्य एकांशं कण्ठमानकम् ॥ २० ॥
शेषं किंनरीवक्त्राद्वै तारं युक्तिवशान्नयेत् ।
नासितारार्धगाढं स्याद्गाढार्धमुखपट्टिका ॥ २१ ॥
व्यासं तालादिभिर्भूष्य नानालंकारसंयुतम् ।
पादं प्रतिकपोतेषु कल्पयेत्स्वस्तिकाकृतिम् ॥ २२ ॥
मध्ये च कूटशालानां पञ्जरोचाल्पनासिकम् ।
कल्पयेत्तु विशेषेण शिखरे भद्रनासिकम् ॥ २३ ॥
शालाग्रयोस्तु कर्तव्या ललाटाख्या तु नासिका ॥ २४ ॥
नासिकालक्षणं प्रोक्तं ततः प्रासादमानकम् ॥ २५ ॥

इति काश्यपशिल्पे नासिकालक्षणं द्वाविंशः पटलः ।

---

अथ त्रयोविंशः पटलः ।

---

प्रासादमानम् ।

---

अथ वक्ष्ये विशेषेण प्रासाद(दे)मानलक्षणम् ।
प्रासादः सदनं सद्म हर्म्य(भर्म)धान्मा(म) निकेतनम् ॥ १ ॥
मन्दिरं भवनं वासो गेहं दिव्यविमानकम् ।
आश्रयं चाऽऽस्पदं चैव आधारं च क्रमेण तु ॥ २ ॥
आधारप्रतिमि(धि)ष्ण्यं च हर्म्यपर्यायवाचकाः ।
तस्मादन्न परो नास्ति परिमाणं समुच्यते ॥ ३ ॥

यवाष्टौ सम्वरेण स्याद्यूरवेष्टकपिंपि च ।
पिशुनामष्टकं प्रोक्तं केशानाग्रं तु संज्ञिका ॥ ४ ॥
बालानां मूर्ध्नि केशः स्यादग्रं तस्योपमानकम् ।
तत्केशाग्रं च साग्रं यल्लक्ष्माणमुदाहृतम् ॥ ५ ॥
सप्तसंख्ययवं तारं मध्यमङ्गुलमुच्यते ।
काराग्राग्रान्धमाख्यातं षट्संख्यं यवविस्तरम् ॥ ६ ॥
शाल्या वामचतुष्कं तु उत्तमाङ्गुलिसंज्ञकम् ।
शाल्यायत्रिगुणं मानमधमं तदुदाहृतम् ॥ ७ ॥
श्वेतशाली महाशाली रक्तशाली तथैव च ।
सौगन्धी हेमशाली च शाली पञ्चविधा स्मृता ॥ ८ ॥
रक्तशाल्यायतं तेषु अङ्गुलार्धं तु संग्रहे ।
एवं तु षड्विधं प्रोक्तं मानाङ्गुलं द्विजोत्तम ॥ ९ ॥
चन्द्रजीवशिवांशं च व्योममेकाङ्गुलाख्यकम् ।
बृक्षपक्षाश्विनी चैव द्वितीयाङ्गुलसंज्ञकम् ॥ १० ॥
कालं चानलरुद्राक्षशूलं चालेखनं गुणकम् ।
तृतीयं गुणसंज्ञाकं वेदाब्धी युगकोलकम् ॥ ११ ॥
चत्वा(तु)रङ्गुलसंज्ञस्ते बाणभूतेन्द्रियास्तृतम् ।
पञ्चाङ्गुलस्यसंज्ञीका................ ॥ १२ ॥
सारं चारमकं चैवर्तुकौशिकषडङ्गुलम् ।
पातालं ऋषिधातं वा.................. ॥ १३ ॥
मात्रे लेकं स्मरं चैव सप्ताङ्गुलविधानतः ।
हस्तिपर्वतमानं च वसवो मूर्तयस्तथा ॥ १४ ॥
अष्टाङ्गुलस्य संज्ञाः स्युः शक्तिद्वारगृहस्य वा ।
सूत्रानन्तघनं तार्क्ष्यं द्विजाश्चैव नवाङ्गुला ॥ १५ ॥
नाडिकाष्टायुतं धर्मं दशाङ्गुलस्य सञ्ज्ञिता ।
कंशातं चैवरोरुद्रमेकादशाङ्गुलाख्यया ॥ १६ ॥
अर्कं भास्क[र]भानुश्च (नू च )द्वादशाङ्गुलसंज्ञितम् ।
चन्द्रादित्यशिवांशं च त्रयोदशाङ्गुला स्तृ(स्मृ)ता ॥ १७ ॥
पञ्चास्यैकातिथि(श्च तिथय)श्चैव पञ्चदशाङ्गुलास्तृ(स्मृ)ता ।
कलामूर्तिद्वयं चैव षोडशाङ्गुलसंज्ञितम् ॥ १८ ॥

पञ्चविंशतिस्त्रिंशच्च चत्वारिंशत्तथैव च ।
पञ्चाशत्षष्टिसप्तत्या अशीतिर्नवतिः शतम् ॥ १९ ॥
प्रत्ययस्त्रीषु पञ्चाशज्जगतीसुगतिस्तथा ।
सत्वरिश्च सशकश्च तुष्टिः पुष्टिर्धृतिस्तथा ॥२० ॥
सुधिश्च दशाद्यादि शतानामभिधानकम् ।
एकादशं शतं चैव सहस्रमयुतं तथा ॥ २१ ॥
नियुतं प्रयुतं कोटिरर्बुदं ब्रूत खर्वटम् ।
निखर्वं शङ्खं पद्मं च समुद्रं मध्यमन्तरम् ॥ २२ ॥
आद्यं परं परार्धं च देशवृद्ध्या प्रकीर्तिताः ।
श्रेष्ठं मात्रान्तरैः(रं) स्तम्भ(म्भानां) द्वादशाङ्गुलं भवेत् ॥ २३ ॥
भानुद्व्याङ्गुलं कृष्णं हस्तमित्युच्यते बुधैः ।
श्रेष्ठमध्यान्तरैर्मात्रैः कल्प्यहस्तं तथोदितम् ॥ २४ ॥
तच्चतुष्कं भवेद्दण्डं तेन वस्त्राणि मापयेत् ।
पञ्चविंशतिमात्रं स्यात्प्राजापत्यं करं बुधः ॥ २५ ॥
षड्विंशतिर्धनुर्मुष्टिः सप्तविंशद्धनुर्ग्रहम् ।
अष्टाविंशाङ्गुलं प्राच्यं वैदेहं नवविंशतिः ॥ २६ ॥
वैपुल्यं(पुल्यं)त्रिंशदङ्गुल्यमेकत्रिंशत्प्रकीर्णकम् ।
एवमष्टविधं हस्तं प्रत्येकं द्विजसत्तम ॥ २७ ॥
अधमं मध्यमोत्कृष्टं भेदेनैव रविद्वयम् ।
धनुर्ग्रहं प्रकीर्णाख्यं द्विजानां गृहमारभेत् ॥ २८ ॥
वैपुल्यं धनुर्मुष्टिभ्यां क्षत्रियाणां म(गृ)हे कुरु ।
प्राजापत्यं करं चैव शूद्रजात्या गृहे भवेत् ॥ २९ ॥
अधिकं जात्यकं हस्तं हीनानां तु विवर्जयेत् ।
हीनाधिकारविप्राणामधिकं च शुभावहम् ॥ ३० ॥
सर्वेषामुदितं हस्तमेवं सद्मनि पूजितम् ।
अन्यं च सर्वदेवानां योग्यं सद्म विभाजयेत् ॥ ३१ ॥
अधिकं कृष्णहस्तं तु सर्वजात्यर्हकं भवेत् ।
यानादिशयनान्तं च कृष्णहस्तेन मापयेत् ॥ ३२ ॥
आरामोद्यानकादीनि प्राजापत्यकरेण तु ।
धनुर्मुष्टिकया चैव ग्रामादि यो(वा)स्तु मापयेत् ॥ ३३ ॥

धनुर्ग्रहेण वाप्यादि नग्रवा(ग्रुग्रा)नं च मापयेत् ।
अथवा कृष्णहस्तेन सर्ववास्तुनि वा द्विज ॥ ३४ ॥

इति काश्यपे प्रासादमानलक्षणं त्रयोविंशः पटलः ।

---

## अथ चतुर्विंशः पटलः ।

---

### मानसूत्रादयः ।

---

अथ वक्ष्ये विशेषेण मानसूत्रस्य लक्षणम् ।
त्रिचतुर्हस्तमारभ्य द्विद्विहस्तविवर्धनात् ॥ १ ॥
नवपङ्क्तिकरान्तं तु आस्तेनर्कक(हस्तेनार्कक)रं भवेत् ।
एवमष्टविधं मानं युग्मायुग्मं चतुश्चतुः ॥ २ ॥
पञ्चषड्ढस्तमारभ्य द्विद्विहस्तविवर्धनात् ।
तिथिद्विरष्टकारान्तमाभासं त्रितलस्य तु ॥ ३ ॥
गृह्य प्रमकराद्यावत्सप्ताष्टाविकतः क्रयः(कराः) ।
चतुष्पञ्चतलं वाऽथ युग्मायुग्मं च ते दश ॥ ४ ॥
विस्तारं सप्तषट्पञ्चभागं कृत्वा द्विजोत्तम ।
रसभूतगांशं तु विस्ताराद्रोपयेत्क्रमात् ॥ ५ ॥
विस्ताराद्द्विगुणं चैव तस्मादष्टांशमाधिकम् ।
पञ्चायाधर्दितं तुङ्गमाभासे सदने द्विज ॥ ६ ॥
शान्तिकं पौष्टिकं चैव जयतं चाद्भुतं तथा ।
सर्वकामिकमित्येते अभिधानं यथाक्रमम् ॥ ७ ॥
हस्तद्वैधभवृत्त्याऽ(द्ध्याऽ)थ व्यासात्संपूर्णमाचरेत् ।
आभासहर्म्यमाख्यातं विकल्पमधुना शृणु ॥ ८ ॥
नवपङ्क्तिकरात्पञ्चषट्पञ्चाशत्करांशकम् ।
द्विद्विहस्तविवृद्ध्या तु चतुर्विंशतिसंख्यया ॥ ९ ॥
पञ्चभूमिं समारभ्य यावदर्कतलान्तकम् ।
अधमं मध्यमोत्कृष्टं विकल्पं च यथाक्रमम् ॥ १० ॥

षट्त्रिंशद्धस्तविस्तारे सप्तपञ्चाशदुच्छ्रये ।
त्रयोदशतलं कुर्यान्मम प्रीतिकरं भवेत् ॥ ११ ॥
विस्तारे सप्तपञ्चाशं नवभिर्हस्तमञ्चत(क)म् ।
तलं षोडशभिर्युक्तं शिवहर्म्यं शिवप्रियम् ॥ १२ ॥
एवं विकल्पमाख्यातं छि(छ)न्दमार्गमथो शृणु ।
त्रिचतुर्दशहस्तादि द्विद्विहस्तविवर्धनात् ॥ १३ ॥
पञ्चषट्षष्टिहस्तान्तं व्यासे वै सप्तविंशतिः ।
वेदभूमिं समारभ्य भानुभूमि(म्य)वसानतु(क)म् ॥ १४ ॥
अधमं मध्यमोत्कृष्टं मानं वेदतलं प्रति ।
सप्ताष्टादशहस्तादि त्रित्रिहस्तविवर्धनात् । १५ ॥
पञ्चषण्णवतिर्यावदुच्चं प्रागिव संख्यया ।
अधमं मध्यमोत्कृष्टं तुङ्गभेदतलं प्रति ॥ १६ ॥
छिन्दमेवंतलाख्यातं जातिहर्म्यंधमं(मथो) शृणु ।
सप्ताष्टादशहस्तादि द्विद्विहस्तविवर्धनात् ॥ १७ ॥
सप्ताशीतीति हस्तान्तं सप्तविंशतिसंख्यया ।
चतुर्भूमिं समारभ्य यावदर्कतलं प्रति ॥ १८ ॥
तावद्विस्तारमाख्यातमुत्सेधं शृणु संव्रतः(सुव्रत) ।
त्रिसप्तविंशद्धस्तादित्रित्रिहस्तविवर्धनात् ॥ १९ ॥
यावदाशतहस्तान्तमुच्चं प्रागिव संख्यया ।
अधमं मध्यमोत्कृष्टं व्यासोच्चं च क्रमोदितम् ॥ २० ॥
एवं जातिविमानं तु सप्तविंशतिधोदितम् ।
जातिछन्दविकल्पं च आभासास्ते द्विजोत्तम ॥ २१ ॥
महतीद्व्यन्तरालपं च क्षुद्रनानाप्रचोदितम् ।
युगाग्रे भूतमाने तु मानसूत्रं च विन्यसेत् ॥ २२ ॥
तदन्याकृतिहर्म्याणां वेदं शृङ्गान्तपूरणम् ।
यत्रैव भज्यते तत्र मानसूत्रं विधीयते ॥ २३ ॥
प्रासादानां तु विस्तारं भित्तिपाद्बाह्यमेव वा ।
तत्पादाभ्यन्तरं वाऽथ तत्पादमध्यमं तु वा ॥ २४ ॥
उत्सेधं तदुपानादि स्तुप्यन्तं वा शिरोन्नतम् ।
सभामण्डपशालानां भित्तिमध्यावसानकम् ॥ २५ ॥

भित्तिमध्येऽङ्घ्रिबाह्ये वा मध्ये वाऽभ्यन्तरेऽपि वा ।
भित्तिबाह्यगतं सौतु बाह्ये वाऽभ्यन्तरेऽपि वा ॥ २६ ॥
तदङ्घ्रिमध्यावसानं मानसूत्रं द्विजोत्तम ।
भित्तिमध्येऽङ्घ्रिविस्तारं चाङ्घ्रिस्थानेषु चोच्यते ॥ २७ ॥
भित्तिबाह्यगतं पादं प्रागेव प्रोच्यते तदा ।
सालानां भित्तिमध्ये वा बाह्ये वाऽभ्यन्तरेऽपि वा ॥ २८ ॥
यानानां शयनानां च स्यान्मध्ये मानसूत्रकम् ।
मानसूत्रं समाख्यातं सर्वेषां सदनादिनाम् ॥ २९ ॥
मानसूत्रं तु बाह्ये स्यात्कूटशालादिनीव्रकम् ।
कूटाद्यात्तवि(वद्वि)शालं वा त्रिपादं वाऽर्धमेव वा ॥ ३० ॥
पादं सार्धं सपादं वा मानसूत्राच्च हीग(निर्ग)तिम् ।
अथवा दण्डमानेन तुङ्गादीनां तु निर्गतिम् ॥ ३१ ॥
दण्डं वा ह्यर्धदण्डं वा द्विदण्डं सार्धदण्डकम् ।
त्रिदण्डं वाऽथ निष्क्रान्तं मानसूत्रात्तु बाह्यतः ॥ ३२ ॥
मानस्याभ्यन्तरे वेशं पिपा(विप)द्धामास्पदं सदा ।
तस्मात्सर्वप्रयत्नेन मानसूत्राद्बहिर्गतम् ॥ ३३ ॥
एतद्विन्याससूत्रं स्यात्समसूत्रात्समं तु वा ।
होमावागतसूत्रं वा अवसानमुदाहृतम् ॥ ३४ ॥
मानविन्याससूत्रं च अवसानं च ते त्रयम ।
ख्यातं संक्षेपतो विप्र शृणुष्वाऽऽयादिलक्षणम् ॥ ३५ ॥

इति काश्यपशिल्पे मानसूत्रादिलक्षणं चतुर्विंशः पटलः ।

---

## अथ पञ्चविंशः पटलः ।

---

### आयादिलक्षणम् ।

---

अथ वक्ष्ये विशेषेण आयादिलक्षणं परम् ।
हर्म्यषड्भागमानं तु गुणाढ्यं वसुभिर्हरेत् ॥ १ ॥

शेषं द्विजातियोनिः स्यात्तमसेभकरं बुधः ।
वर्जयेद्वसुभिश्चैव ऋक्षे भूतं हयादिकम् ॥ २ ॥
नवधा परितो हस्तं पातलैर्ह्रासयेद्बुधः ।
शेषमर्कादिपारं स्याद्व्यासायामकरं गुणैः ॥ ३ ॥
त्रिंशद्भिर्वर्धयेभित्तिं शेषं प्रतिपदादयः ।
तिथयस्तु समाख्यातं तुङ्गं हस्ताष्टवृद्धिदम् ॥ ४ ॥
नाभिस्तु निर्विशेषमायामिन्युच्यते बुधैः ।
तुङ्गं नवं तु मध्यात्तु प्राम(क्रमा)द्वै नाडिभिर्हरेत् ॥ ५ ॥
शेषं व्ययमिति ख्यातं आयाधिका(क्यं) व्ययक्षयम् ।
केतुः सिंहो वृषो हस्ती गुरुः शुक्रो बुधः शशी ॥ ६ ॥
यजमानस्य जन्मर्क्षादविरोधे दिनं तथा ।
वास्तुजन्मविरोधं च त्रसा(तथा) ह्यात्मकुलं शुभम् ॥ ७ ॥
एवं परीक्ष्य बहुधा शुभमानं तु संग्रहेत् ।
अथवा विस्तृतायामहस्तमष्टगुणीकृते ॥ ८ ॥
भानुव्यये विशेषं तु आयमित्युच्यते बुधैः ।
नवद्वादशभिर्ह्रासैः शेषं व्ययमुदाहृतम् ॥ ९ ॥
वसुभिर्गुणिते ऋक्षे हृते शेषादिकं दिनम् ।
गुणवृद्ध्याऽष्टभिर्ह्रासे शेषं ध्वजादियोनरः(यः) ॥ १० ॥
नवऋद्ध्यापरीतोऽस्तं सप्तसंख्या तु ह्रासयेत् ।
शेषमर्कादिवारः स्यात्त्रिंशद्ध्रासे तिथिर्भवेत् ॥ ११ ॥
प्रागवच्छुभाशुभं वक्ष्ये शुभमानं तु संग्रहेत् ।
त्रिपञ्चयुग्मं वेदषडष्टनव भाति वै ॥ १२ ॥
सदेष्टसिद्धिदाः प्रोक्ताः शेषास्तुः परिवर्जिताः ।
नृपकर्तुश्च जन्मर्क्षाद्गृहऋक्षावसानकम् ॥ १३ ॥
गणयेन्मतिमान्विप्रः शुभमानं तु गृह्यताम् ।
लग्नाष्टमविनाशं च दुष्टयोगं च वर्जयेत् ॥ १४ ॥
शूर्पा(ला)दियोगदोषाढ्ये दुष्टयोग उदाहृतः ।
आयादिरेवमाख्यातं नागरादिविधिं शृणु ॥ १५ ॥

## नागरादिविमानम् ।

---

नागरादिविमानानां लक्षणं वक्ष्यतेऽधुना ।
हिमाद्रिकन्ययोरन्तर्गतो देश उदाहृतः ॥ १६ ॥
सोऽपि देशस्त्रिधा भिन्नस्तत्तद्देशोद्भवैर्गुणैः ।
यथैव देहिनां देहो वातपित्तकफात्मकः ॥ १७ ॥
तथा ह्येतज्जगत्सर्वं विज्ञेयं त्रिगुणात्मकम् ।
सात्ति(त्त्वि)कं तामसं चैव राजसं च त्रिधा स्मृतम् ॥ १८ ॥
हिमाद्रिविन्ध्ययोरन्तर्गता सत्त्वा वसुंधरा ।
विन्ध्यादिकृष्णवेण्यन्ता राजसाख्या मही मता ॥ १९ ॥
कृष्णवेण्यादिकन्यान्तं तामसं भूतलं भवेत् ।
नागरं सात्त्विके देशे तामसे पे(वे)सरं भवेत् ॥ २० ॥
राजसं द्राविडे देशे कामदेवं हि भावहे(ये)त् ।
सात्त्विके नागरे हर्म्यं तामसे वेसरालयौ ॥ २१ ॥
राजसैर्द्राविडैर्हर्म्यं क्रमात्पुण्डशियोषितः ।
विष्णुर्महेश्वरो धाता क्रमाद्धर्म्यादिदेवताः ॥ २२ ॥
नागरं भूसुरं विद्याद्वेसरं वैश्यमुच्यते ।
द्राविडं तनृपं ज्ञेयं मात्रती(नतः)शृणु सुव्रत ॥ २३ ॥
कूटकोष्ठादिनिष्क्रान्तं मानसूत्रे तु सुस्थितम् ।
उन्नतावनतोपेतौ कूटकोष्ठौ यथाक्रमम् ॥ २४ ॥
एकाकारतलस्तम्भपत्रतोरणसंयुतम् ।
क्षुद्रकोष्ठसमायुक्तं महानास्यपरे द्विज ॥ २५ ॥
वेदिकाजालकोपेतं कूटवेदाश्रशीर्षकम् ।
एकानेकतलं वाऽपि सालीन्द्रं वाऽपि हीनकम् ॥ २६ ॥
वेदाश्रं शीर्षं कण्ठं स्यात्सालाकारमथापि वा ।
नागरं भवनं ख्यातं तत्तद्देशे प्रकल्पितम् ॥ २७ ॥
प्राग्वत्कूटविनिष्क्रान्तं कोष्ठकूटोद्गतं तु वा ।
मानसूत्राद्बहिष्कूटं नीव्रकूटं तु कोष्ठकम् ॥ २८ ॥

मध्यकोष्ठं सभद्रं वा द्विभद्रं वा द्विजोत्तम ।
पञ्जरं मानसूत्रेण कूटनिष्क्रान्तसागरम् ॥ २९ ॥
उन्नतावनतो वेला सौष्ठीकोपयथाक्रमम् ।
उन्नतं सान्तरं मञ्चं तं तं प्रस्तरहीनकम् ॥ ३० ॥
चतुरश्राष्टवृत्ताभं कूटं क्रमात्तले तले ।
नानामसूरकस्तम्भवेदिकालकतोरणैः ॥ ३१ ॥
वृत्ताख्यस्फाटितैर्हस्तितुण्डैः कुम्भलतादिभिः ।
हारान्तरेषु मञ्चोर्ध्वे क्षुद्रकोष्ठयुतं तु वा ॥ ३२ ॥
तत्रैव हस्तितुण्डं वा भद्रनास्यल्पमेव वा ।
साधारं वा निराधारमेकानेकतलं तु वा ॥ ३३ ॥
शिरसो वर्तनं कण्ठं वृत्तं वाष्टाश्रमेव वा ।
युगाश्रं वा शिरश्चेदीदृशं विमानं द्राविडं भवेत् ॥ ३४ ॥
तदेव चरणाधारमेकाकारं तु कल्पयेत् ।
आ(हा)रान्तरे विशेषेण कल्पवृत्तस्फुटोदयम् ॥ ३५ ॥
समं तु कूटकोष्ठावृद्धौ सान्तरमस्तरान्वितौ ।
हीनोवान्तरमन्तोर्ध्वे निष्पञ्चसमसूत्रकम् ॥ ३६ ॥
हारान्तरे तु कर्तव्यं भद्रं वा भद्रपञ्जरम् ।
कपोतपञ्जराढ्यं वा सान्तरमस्तरान्वितम् ॥ ३७ ॥
सर्वेषां कण्ठकूटानामाशीर्षं तु युगाश्रकम् ।
वस्वश्रं वेदिकोपेतं मण्डलं शीर्षकं गलम् ॥ ३८ ॥
वस्वश्रं वा शिरः कण्ठं युगाश्रं वा प्रकल्पयेत् ।
एतच्च द्राविडं ख्यातं होमाद्याकुञ्चलान्तरम् ॥ ३९ ॥
वस्वश्रं वा षडश्रं वा तच्च द्राविडमुच्यते ।
एवं त्रिविधं नित्यं तु प्रोच्यते द्राविडालयम् ॥ ४० ॥
वेसराकूटकोष्ठादिनीव्राः स्युः समसूत्रणाः ।
वृत्ताकारशिरोपेतान्कण्ठकूटान्प्रकल्पयेत् ॥ ४१ ॥
वृत्तगर्भगृहाकारं बाह्यवृत्ताभमेव वा ।
वृत्तग्रीवशिरोपेतं यथेष्टं शिखरेण वा ॥ ४२ ॥
सालिन्द्रं वा सभद्रं वाऽप्येकानेकतलं तु वा ।
समाश्रं वाऽऽयताश्रं वा वृत्तं वृत्तायतं तु वा ॥ ४३ ॥

द्व्यश्रवृत्ताथवा(यतं)हर्म्यं कूटकोष्ठादिभिर्युतम् ।
उन्नतावनतोपेतौ कूटकोष्ठौ यथाक्रमम् ॥ ४४ ॥
समौ वा कूटकोष्ठौ द्वौ बाहू भूम्येकमेव वा ।
वेसरं भवनं ख्यातमथवाऽन्यप्रकारतः ॥ ४५ ॥
जन्मादिस्तूपिपर्यन्तं युगाश्रं नागरं भवेत् ।
वस्वश्रं शीर्षं कण्ठं वा द्राविडं भवनं भवेत् ॥ ४६ ॥
वृत्तग्रीवाशिरोपेतं वेसरं हर्म्यमीरितम् ।
कूटकोष्ठविहीनानां हर्म्यकं कथितास्तिमे( तं त्विदम् ) ॥ ४७ ॥
नानाधिष्ठानसंयुक्तं गलं प्रत्यङ्घ्रि भेदितम् ।
सर्वत्र वृत्तपादं वा वेसरे भवने कुरु ॥ ४८ ॥
लिङ्गं च पिण्डिकां चैव प्रासादं चैव जातिकाम् ।
सर्वसंपत्समृद्धिः स्यान्नृपतेर्वास्तु मज्जनम् ॥ ४९ ॥
परिते विपरीते वा राजराष्ट्रभयंकरम् ।
तस्मात्सर्वप्रयत्नेन एकजात्यैवमाचरेत् ॥ ५० ॥
नागरे सकलं शान्तं वेसरे यानपत्तिनम् ।
भोगं वीरं च नृत्तं च द्राविडे भवने भवेत् ॥ ५१ ॥
अन्यथा चेद्विपत्यै च कर्तुर्भर्तुश्च देहिनाम् ।
नागरादिविधिः प्रोक्तो गर्भन्यासविधिं शृणु ॥ ५२ ॥

इति काश्यपशिल्पे नागरादिविधिः पञ्चविंशः पटलः ।

---

## अथ षड्विंशः पटलः ।

---

### गर्भविन्यासः ।

---

अथ वक्ष्ये विशेषेण गर्भन्यासविधिं परम् ।
प्रासादगे(गे)हमित्युक्तं तस्य प्रकारो वास्तुगर्भकम् ॥ १ ॥
गुरुहीने गृहे विप्र सकृत्कालं नवास्यकम् ।
अहमन्यश्च वेदाश्च न वसेयुश्च (र)गर्भकम् ॥ २ ॥

तस्मात्सर्वप्रयत्नेन गर्भन्यासं तु कारयेत् ।
श्रीप्रणं(दं) भा(प्रा)णिनां गर्भमितरे श्रीकरं भवेत् ॥ ३ ॥
अधिष्ठानप्रतेरुर्ध्वे भूसुराणां हिताय वै ।
कुमुदूर्ध्वे नृपाणां तु जगत्यूर्ध्वे विशां वरम् ॥ ४ ॥
होमोर्ध्वं गर्भविन्यासं शूद्राणामभिवृद्धिदम् ।
सर्वजात्यन्तं हं(सं)प्रोक्तं भूमौ त्वाद्येष्टकोपरि ॥ ५ ॥
प्रासादमण्डपे चैव प्राग्द्वारे गोपुरे तथा ।
परिवारालये चैव गर्भन्यासं तु कारयेत् ॥ ६ ॥
यत्रैऽऽद्येष्टकान्यासं तत्र गर्भं निधापयेत् ।
सौवर्णं राजतं ताम्रं श्रेष्ठमध्याधमं क्रमात् ॥ ७ ॥
कांस्येनैवाथवा विप्र कर्तव्यं गर्भभाजनम् ।
पञ्चाङ्गुलं समारभ्य यावद्वै विंशदङ्गुलम् ॥ ८ ॥
एकैकाङ्गुलवृद्ध्या तु कलासंख्या तु भाजनम् ।
एकादिषोडशान्तानां भूमीनां तु यथाक्रमम् ॥ ९ ॥
गर्भभाजनताराख्ते त्वङ्घ्रिमूलतरं तु वा ।
गर्भभाजनविस्तारं विस्तारसदृशोन्नतम् ॥ १० ॥
भाजनोच्चस्य भागैकं विधानस्योच्छ्रयं भवेत् ।
भाजने द्वित्रिभागान्तं विधानालम्बनं द्विज ॥ ११ ॥
यवैकव्यासमारभ्य यवार्धैः कोष्ठविस्तृतम् ।
फलोच्चं त्रिचतुर्भागं कोष्ठभित्त्युदयं भवेत् ॥ १२ ॥
मध्यकोष्ठे न्यसेत्कूटमिन्द्रनाभसमन्वितम् ।
तत्पूर्वं ह्यष्टकोष्ठेषु परितो द्विजसत्तम ॥ १३ ॥
अनन्तादिशिखण्ड्यन्तं मूलमन्त्रं निधापयेत् ।
तद्बाह्ये षोडशे कोष्ठे पूर्वादिक्रमयोगतः ॥ १४ ॥
अकारादिविसर्गान्तस्प(स्व)रान्न्यस्वात्र(स्यात्क्र)मेन(ण)तु ।
रत्नलोभा(हेमा)नि धाक्रा(न्या)नि फलाभ्य(न्य)न्तवत्र(रक्रे)न्यसेत् ॥ १५॥
मृत्कन्दधान्यपत्राणि गर्भगर्ते तु विन्यसेत् ।
फलशुद्धिं ततः कृत्वा गव्यदस्त्वेत्युदाहरन् ॥ १६ ॥
माणिक्यं विन्यसेत्कूटे कूटाक्षरमुदाहरन् ।
अनन्ते विन्यसेद्वज्रं सूक्ष्मे सौ(मौ)क्तिकं विन्यसेत् ॥ १७ ॥

शिलोत्तमैरिन्द्रनीलं स्यात्स्फाटिक्यैकनेत्रके ।
एकरुद्रे तु शङ्खं स्यात्त्रिमूर्ते पुष्करागकम् ॥ १८ ॥
श्रीकण्ठे सूर्यकान्तं स्याच्छिखण्डौ तु विसूरकम् ।
स्वर्णेनैव जगत्कृत्वा अकारे विन्यसेद्बुधः ॥ १९ ॥
कपालं रजतेनैव इकारे तु निधापयेत् ।
तन्त्रेणैव तु तं कुम्भमुकारे द्विजसत्तम ॥ २० ॥
आरकूटेन तद्द्वारं गकारे तु निधापयेत् ।
कांसे(स्ये)नैव वि(पि)नाकं तु अकारे विन्यसेद्बुधः ॥ २१ ॥
सीसेन परशुं कृत्वा एकारे तु निधापयेत् ।
त्रपुणा हरणं कृत्वा औकारे तु निधापयेत् ॥ २२ ॥
त्रिशूलमायसेनैव अंकारे तु निधापयेत् ।
स्वर्णेन वृषभं कृत्वा कूटाक्षरे निधापयेत् ॥ २३ ॥
आकारे विन्यसेच्छम्यामीकारे तु मनःशि(नःशि)लाम् ।
ऊकारे जातिलिङ्गं तु ऋकारे गैरिकां न्यसेत् ॥ २४ ॥
सौराष्ट्रं चैव लृकार एकारे त्वञ्जनां न्यसेत् ।
गोरोचने तथांकारे विसर्ग्ये नीलधारकम् ॥ २५ ॥
तद्बीजं समनुस्मृत्य विन्यसेत्तत्क्रमेण तु ।
यवा नीवारशाली च प्रियङ्गुतिलसर्षपम् ॥ २६ ॥
मुद्गानि सप्त बीजानि पूरयेद्गर्भभाजने ।
विधाय च विधानेन सुस्निग्धं सुदृढं कुरु ॥ २७ ॥
प्रासादस्योत्तरे चाग्रे पञ्चषट्सप्तहस्तकाम् ।
षोडशस्तम्भसंयुक्तां प्रपां कृत्वाऽतिसुन्दराम् ॥ २८ ॥
विधानेनोर्ध्वमाच्छाद्य तरङ्गैः स्तम्भवेष्टनैः ।
द्वारतोरणसंयुक्तं दर्भमालादिभूषितम् ॥ २९ ॥
मण्डपस्य त्रिभागैकं मध्ये वेदिं प्रकल्पयेत् ।
हस्तमात्रसमुत्सेधं तालमात्रमथापि वा ॥ ३० ॥
परितस्त्वग्निकुण्डानि महाशालं द्विजोत्तम ।
चतुरश्रं धनुर्वृत्तं पद्मं प्रागादिषु क्रमात् ॥ ३१ ॥
त्रिमेखलसमायुक्तं नाभियोनिसमन्वितम् ।
दर्पणोदरसंकाशं कुण्डवेदिस्थलं कुरु ॥ ३२ ॥

तच्छिलिपत्रतमुद्वास्य गोमयालेपनं कुरु ।
पिष्टचूर्णैरलंकृत्य पुण्याहं मोक्षयेत्कु(र्णं कु)रु ॥ ३३ ॥
वेदी द्वे स्थण्डिले कुर्याच्चतुर्द्रोणैस्तु शालिभिः ।
तिलतण्डुललाजैश्च दर्भैः पुष्पैः परिस्तरेत् ॥ ३४ ॥
गन्धपुष्पादिभिः पूज्या दिग्देवा नाममन्त्रकैः ।
गव्याभिषेचय फलं तु स्नापयेद्गन्धतोयकैः ॥ ३५ ॥
तन्तुना कौतुकं बद्ध्वा नववस्त्रेण वेष्टयेत् ।
स्थण्डिले तु निधातव्यं कूटाक्षरमुदाहृतम् ॥ ३६ ॥
परितोऽष्टौ घटान्यस्त्वा(स्य) ससूत्रान्सविधानकान् ।
सकूर्चान्वस्त्रसंछन्नान्स(सगन्धान्परितः क्रमात् ॥ ३७ ॥
विश्वे[श्व]रादिकुम्भस्थे स्तोत्राभ्यर्च स्वमन्त्रतः ।
कुण्डानां पञ्चसंस्कारं कृत्वा होमं समाचरेत् ॥ ३८ ॥
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत् ।
समि[दा]ज्यचरुल्लाँजतिलतण्डुलसर्षपान् ॥ ३९ ॥
हृदयादिषु सङ्गैश्च ईशानेन क्रमेण तु ।
होमं कृत्वा विशेषेण प्रत्येकाष्टशताहुतीः ॥ ४० ॥
द्रव्यान्ते व्याहृतीर्हुत्वा मूलेनैव शताहुतीः ।
जयादिरभ्यातानैश्च राष्ट्र[भृच्चैव]होमयेत् ॥ ४१ ॥
एवं जागरणं रात्रौ प्रभाते सुमुहूर्तके ।
सुनक्षत्रे सुलग्ने तु सुतिथौ च सुवारके ॥ ४२ ॥
शिवद्विजकुले जातः स्वाचार्यः शिवदीक्षितः ।
स्नानद्वयसमायुक्तः सकलत्रः सविग्रहः ॥ ४३ ॥
सितवस्त्रोत्तरीयश्च सितमाल्यानुलेपितः ।
आचार्यान्पूजयेत्तत्र वस्त्रहेमाङ्गुलीयकैः ॥ ४४ ॥
शिल्पिनः पूजयेत्तत्र वस्त्रैराभरणादिभिः ।
गर्भस्थानं प्रविश्याथ कर्ता कूर्चा(चाऽऽचा)र्यशिल्पि च ॥ ४५ ॥
अष्टधा विभजेद्भित्तिं बाह्यतश्चतुरस्त्यजेत् ।
त्रीणि चाभ्यन्तरे वर्ज्य शेषांशे भाजनं न्यसेत् ॥ ४६ ॥
हृन्नदीसरयवल्मीकं हलस्तेऽङ्गुलिरातटे ।
नागावृषभशृङ्गे च अष्टमुद्रा(मृद्ग्रा)ह्य देशिकः ॥ ४७ ॥

गर्भगर्ते नमोब्बा ... कन्दान्न्यसेत्ततोपरि ।
मध्यमे त्वम्बुजं न्यस्यात्पूर्वे कुमुदकन्दकम् ॥ ४८ ॥
दक्षिणे चोत्पलं कन्दं सौगन्धि पश्चिमे न्यसेत् ।
सौम्य उशीरकन्दः स्याद्बीजं तदुपरि न्यसेत् ॥ ४९ ॥
पूर्वे तु विन्यसेच्छालिं व्रीहिं वै दक्षिणे न्यसेत् ।
पश्चिमे गो(को)द्रवं विद्यान्माषमुत्तरतो न्यसेत् ॥ ५० ॥
पाके विन्यसेन्माषान्नैर्ऋत्यां कुरु पूजकैः ।
प्रियंगु वायुदिग्भाग ऐशान्ये त्म(तु)कुलस्थ(लित्थ)कम् ॥ ५१ ॥
एवं न्यस्य हृदं मन्त्रांस्तथा वै गर्भभाजनम् ।
सर्ववाद्यसमायुक्तं नृत्तगेयसमन्वितम् ॥ ५२ ॥
जयशब्दसमायुक्तं ब्रह्मघोषसमन्वितम् ।
प्रासादबीजमुच्चार्य स्थापयेद्गर्भभाजनम् ॥ ५३ ॥
शैलैर्वा इष्टिकाभिर्वा सुधया सुदृढं कुरु ।
गन्धपुष्पादिभिः पूज्य प्रसादं .. ... .. ।
गर्भन्यासविधिः ख्यातस्तस्त्वेकाविधिं शृणु ॥ ५४ ॥

इति काश्यपशिल्पे गर्भन्यासविधिः षड्विंशः पटलः ।

---

अथ सप्तविंशः पटलः ।

---

एकतलम् ।

---

अथ वक्ष्ये विशेषेण हर्म्यमेकतलं शृणु ।
तस्य विस्तारतुङ्गं च प्रोक्तं प्रासादमानके ॥ १ ॥
युगास्रं वृत्तमायाश्रं(तं) वस्वश्रं च षडश्रकम् ।
अष्टाश्रमाकृतिस्त्वेषां शिखरेऽपि तथैव च ॥ २ ॥
हर्म्यतारार्धमानं तु कन्यसं मुखमण्डपम् ।
हर्म्यतारसमं श्रेष्ठं तयोर्मध्येऽष्टभाजिते ॥ ३ ॥
मुखमण्डपदीपं (दैर्घ्यं) तु नवधा कथितं मया ।
प्रासादसदृशं व्यासमुत्तमत्रयमण्डपम् ॥ ४ ॥

प्रासादावेशनं श्लेषा(श्रेष्ठं) दण्डं वाऽर्धार्धदण्डकम।
द्विदण्डं वा प्रवेशं तु मानसूत्रं द्विजोत्तम॥ ५॥
अन्तरालसमायुक्तं युक्तसर्वाङ्गसंयुतम्।
सावकाशान्तरालं च दीर्घं द्वित्रिचतुष्टयम्॥ ६॥
सोपानं पार्श्वयोः कुर्याद्गजहस्तविभूषितम्।
प्रासादभित्तिविस्तारतुल्यं वाऽर्धत्रिपादकम्॥ ७॥
अन्तरालस्य भित्तेश्च व्यासाः स्युर्मण्डपे तथा।
कूटकोष्ठादियुक्तं वा हीनं वा मुखमण्डपम्॥ ८॥
त्रिवर्गसंहितं वाऽपि तोरणाद्यैर्विचित्रितम्।
एकानेकतलं वाऽथ कर्तव्यं मुखमण्डपम्॥ ९॥
हर्म्यताराग्निभागैकं गर्भगेहस्य विस्तरम्।
पञ्चभागेऽग्निभागं च वेदांशं सप्तभागिकम्॥ १०॥
द्वारांशे भूतभागं तु अर्कांशं रुद्रभागिके।
त्रयोदशांशे वस्वंशं दशं वस्वांशभागिके॥ ११॥
सपादं च नवांशं च व्यासोद्धं त्रि(चं हि) द्विजोत्तम।
गर्भगेहस्य विस्तारो नवधा परिकीर्तितः॥ १२॥
शेषभित्तिविशालं स्यात्परितः कल्पयेद्बुधः।
एकद्वित्रिचतुष्पञ्च पङ्क्तिः स्यादेकभागिके॥ १३॥
हर्म्योच्चं वसुधा भज्य एकांशं हि तलोन्नतम्।
द्विभागं चरणायामं प्रस्तरस्यैकभागता॥ १४॥
गलोच्चं त्वेकभागेन द्विभागं शिखरोदयम्।
एकांशं स्तूपितुङ्गं तु कल्प्यैवं शान्तिकं भवेत्॥ १५॥
एकांशरहितं शेषं पञ्चं वा पार्श्वदेवता।
एवं शान्तिकमाख्यातं पौष्टिकं चाधुनोच्यते॥ १६॥
सदनोच्चे नवांशे तु शिवांशं तु तलोदयम्।
अन्धे(र्धे)नांशसमायुक्तं द्व्यंशं चरणायतम्॥ १७॥
पञ्चमानं तथैवांशं सार्ध्यं पादांशकं गलम्।
सत्रिभागं द्विभागं तु शिखरोदयमीरितम्॥ १८॥
स्(यु)पोत्सेधं तथैकांशं पौष्टिकं सदनान्वितम्।
सदंतच्छे(दनोच्चं) दशांशैकमधिष्ठानोदयं भवेत्॥ १९॥

वृत्तमस्तककण्ठाढ्यं वस्वग्रं वा गलं शिरः ।
वृत्तकेशि(स)रमाख्यातं वस्वग्रं राजकेसरम् ॥ ५० ॥
प्रासादस्य तु विस्तारः पञ्च सप्ताष्ट वा भवेत् ।
त्रिभागं वा द्विभागं वा प्राग्भद्रा मध्यभद्रकम् ॥ ५१ ॥
दण्डं वाऽध्यर्धदण्डं वा द्विदण्डं वा त्रिदण्डकम् ।
मध्यभद्रस्य निष्क्रान्तं भद्रापेक्षितहर्म्यके ॥ ५२ ॥
यनू(यन्म)हानासिकोपेतं शिरः स्वायक(न)वृत्तकम् ।
पादं प्रत्यल्पनासाढ्यं कण्ठं वै शीर्षमा(का)कृति ॥ ५३ ॥
कल्याणसुन्दरं ख्यातं सर्वदेवार्हकं परम् ।
तदेव भद्रनासाढ्यं पूर्वापरं द्विजोत्तम ॥ ५४ ॥
ललाटनासिकोपेतं पार्श्वयोर्द्विजसत्तम ।
समं वा सायतं वाऽथ कल्पितं कोशलं भवेत् ॥ ५५ ॥
तलं प्रतिविमानादि दु(उ)न्नतं म(त्व)थ वक्ष्यते ।
स्कन्दं वै पूर्वदिग्भागे दक्षिणामूर्तिदक्षिणे ॥ ५६ ॥
पश्चिमे विष्णुमूर्तिं वा लिङ्गोद्भवमथापि वा ।
धातारमुत्तरे विप्र भारस्थाने तु वर्जयेत् ॥ ५७ ॥
मण्डपे दक्षिणे भद्रे स्थापयेद्द्वि(द्वि)विधा(ना)यकम् ।
पूर्वे वा पश्चिमे तस्य नृत्तमूर्तिं प्रकल्पयेत् ॥ ५८ ॥
दुर्गामुत्तरदिग्भागे क्षेत्रपालं तु वा द्विज ।
स्थानं वा सदनं वाऽथ दिशि मूर्तिं प्रकल्पयेत् ॥ ५९ ॥
एवं धरातलोर्ध्वे तु ... .... ... ।
स्कन्दं वै पूर्वदिग्भागे शक्रं वा सितरोहितम् ॥ ६० ॥
हस्तिविधीनब्जकासीन एक एव समन्वितम् ।
दक्षिणे दक्षिणामूर्तिं वीरभद्रमथापि वा ॥ ६१ ॥
पश्चिमे नारसिंहं तु सौम्यमूर्तिमथापि वा ।
उत्तरे तु विधातार्थ(रं)अब्जं वा द्विजसत्तम ॥ ६२ ॥
प्रस्तरोपरि कर्तव्यमेकाद्वित्रितले तथा ।
चतुर्भूम्यादिभूमासु महेशस्तु यथेष्टगः ॥ ६३ ॥
उमास्कन्दादिसहितो महेशः परिकीर्तितः ।
अन्यदेवाश्च गन्धर्वाः सिद्धा दैत्या मरुद्गणाः ॥ ६४ ॥

कलान्तयुगभूम्यादिग्रीवे च प्रस्तरान्तके ।
इष्टमूर्तिमवि(रि)ष्टांशे कल्पयेत्कल्पवित्तमः ॥ ६५ ॥
गलस्यादिस्थमञ्चोर्ध्वे कोणेषु वृषभं कुरु ।
कोणं प्रति द्वयं वैकं वृषभं शयनं कुरु ॥ ६६ ॥
भूतं वाऽचतुष्कोणे हृदयाञ्जलिसंयुतम् ।
कल्पयेत्पद्मपीठे द्वे आसीनं तु बृहत्तनुम् ॥ ६७ ॥
आमोदं चाग्निकोणे तु प्रमोदं नैर्ऋते भवेत् ।
प्रमुखं वायुकोणे तु दुर्मुखीशानकोणके ॥ ६८ ॥
श्वेतं रक्तं तथा पीतं कृष्णमग्न्यादिषु क्रमात् ।
यमो वै देवता ह्येषा(ता)तासामावाहनं कुरु ॥ ६९ ॥
करालमुद्गुल्मासु ककर्पिं कणलेपनम् ।
नानालंकारसंयुक्तं नानालीलासमायुतम् ॥ ७० ॥
नानाक्रीडसमायुक्तं सुधया धातुभिस्तथा ।
यथोचितं कल्पयेत्तु शूलादाविष्टका भवेत् ॥ ७१ ॥
एवं तलमिदं ख्यातं द्वितलं तु ततो विदुः ॥ ७२ ॥

इति काश्यपशिल्प एकतलविमानलक्षणं सप्तविंशः पटलः ।

---

## अथाष्टाविंशः पटलः ।

---

### द्वितलम् ।

---

अथ वक्ष्ये विशेषेण द्वितलस्य तु लक्षणम् ।
प्रासादमानवत्कुर्याद्विस्तारोच्चं च निर्गमः ॥ १ ॥
विन्याससूत्रयोरन्तर्व्यासं सप्ततु वा भवेत् ।
एकांशं कूटविस्तारं कोष्ठं तु द्विगुणायतम् ॥ २ ॥
कूटव्याससमं कोष्ठं विस्तारं द्विजसत्तम ।
शेषं हारान्तरं कोष्ठं पार्श्वयोस्तु सपञ्जरम् ॥ ३ ॥
हारान्तरमशेषं वा त्रिपादं वाऽर्ध एव वा ।
पञ्जरव्यासमाख्यातं कूटनासमोगतिम् ॥ ४ ॥

अन्तःप्रवेशं वा मानसूत्राणि प्रयुतं तु वा ।
पञ्जरं कर्णकूटाभं नासिकाकारमेव वा ॥ ५ ॥
प्रासादोच्चं तु विभजेदष्टाविंशतिभागया ।
गुणांशं(त्र्यंशं)धरातलोत्सेधं रसांशं चरणोदयम् ॥ ६ ॥
प्रस्तरोच्चं गुणांशं स्याद्भूतांशं चरणोदयम् ।
द्विभागं प्रस्तरोत्सेधमेकांशं वेदिकोदयम् ॥ ७ ॥
द्विभागांशं गलोत्सेधं सार्धवेदं शिरोदयम् ।
अत्यर्धांशं शिखामानं कल्पितं शान्ति(न्ति)कं भवेत् ॥ ८ ॥
चतुस्त्रिंशतिभागं तु कृत्वा च सदनोदयम् ।
सार्धार्धांशमधिष्ठानं तद्द्विधं चरणोदयम् ॥ ९ ॥
प्रस्तरोच्चं गुणांशं स्यात्तलिपं सार्धषड् भवेत् ।
गुणांशं मञ्चमानं तु व्योमांशं वेदिकोदयम् ॥ १० ॥
सार्धाग्न्यंशं गलोत्सेधं भूतांशं शिखरोदयम् ।
अर्धांशं शिखरमानं पौष्टिकं सदनं भवेत् ॥ ११ ॥
तदेव गलमानं तु सार्धद्व्यंशेन कल्पयेत् ।
शेषं पूर्ववदेवं तु त्रयस्त्रिंशोदये कृते ॥ १२ ॥
जयदं सदनं ह्येतत्सर्वदेवप्रियावहम् ।
षट्त्रिंशद्विभजेत्य(त्सा)र्धं धष्यं तु गन्ध(घटतुङ्गं ध)रातलम् ॥ १३ ॥
वस्वंशपादमानं तु सार्धाग्न्यंशं तु प्रस्तरम् ।
सप्तांशं चरणोच्चं तु गुणांशं च गलोदयम् ॥ १४ ॥
भूतांशं शिखरोच्चं तु स्थू(स्तू)प्युच्चं सार्धभागया ।
अर्धभूतं सदनं ह्येतत्कल्पयेत्कल्पवित्तमः ॥ १५ ॥
चत्वारिंशतिभागं तु कर्तव्यं सदनोदयम् ।
अधिष्ठानोच्चवेदांशं स्तम्भं तद्द्विगुणायतम् ॥ १६ ॥
युगांशं मञ्चमानं च स्तम्भलिप्सार्धसप्तकम् ।
त्रिभागं प्रस्तरोत्सेधं द्विभागं वेदिकोदयम् १७ ॥
त्रिभाग ग्रीवमानं तु शिखरं सप्तभागया ।
शेषं शिरोदयं ख्यातं विमानं सर्वदा शिखा ॥ १८ ॥
ह्येमादिस्तूपिपर्यन्तं युगाश्रं परिकल्पयेत् ।
चतुष्कूटं चतुःशालं पञ्जराष्टकसंयुतम् ॥ १९ ॥

षडष्टवाल्पनासिं च पादं प्रति प्रकल्पयेत् ।
कल्पितं वेदिकाद्यैस्तु नानाचित्रैर्विचित्रितम् ॥ २० ॥
एतत्स्वस्तिकमाख्यातं सर्वदेवप्रियावहम् ।
तदेव शीर्षकाग्रेषु पार्श्वयोः स्वल्पनासिका ॥ २१ ॥
स्वस्तिभद्रमिति ख्यातं मम प्रीतिकरं भवेत् ।
तदेव नतकूटं च कोष्ठं नासिकपञ्चकम् ॥ २२ ॥
नतपञ्जरसंयुक्तं यथेष्टं क्रमशीर्षतः ।
स्तूपिघटं गलंतं च श्रीकरं समुदाहृतम् ॥ २३ ॥
तदेव कूटकोष्ठाः स्युः कूटशालोन्नताः समाः ।
निम्नपञ्जरवन्तो सौ यत्तत्कैलासमुच्यते ॥ २४ ॥
तदेव कूटकोष्ठौ द्वौ निम्नोन्नतविवर्जितौ ।
अन्तरप्रस्तरोपेतौ समसूत्रततौ नतौ ॥ २५ ॥
हारान्तरे विशेषेण युगं वा युगपञ्जरम् ।
चतुष्कूटं चतुःशालं षडष्टवाल्पनासिका ॥ २६ ॥
वस्वग्रं वेदिकोपेतं वर्तुलं शीर्षकं गलम् ।
शिखरं वसुनासाढ्यं भद्राभद्रं चतुश्चतुः ॥ २७ ॥
वेदिकातोरणाढ्यं तु रुद्रकान्तमिदं परम् ।
कूटात्कोष्ठकनिष्ठान्तं दण्डं वाऽप्यर्धदण्डकम् ॥ २८ ॥
द्विदण्डं वा त्रिदण्डं वा कूटात्कोष्ठस्य निर्गतिः ।
नानाधिष्ठानसंयुक्तं नानास्तम्भविमानितम् ॥ २९ ॥
प्रागुक्तानां तु सर्वेषां कल्पितं वाऽपि हीनकम् ।
तदेव शिखरे चार्धकोष्ठकं तु चतुष्टयम् ॥ ३० ॥
चतुरश्रं शिरोपेतं चतुष्कूटसमन्वितम् ।
षडष्टनासिकोपेतं स्वस्तिसं(ब)न्धमिति स्मृतम् ॥ ३१ ॥
तदेव कूटकोष्ठौ द्वौ चान्तरप्रस्तरान्वितौ ।
हारपञ्जरसंयुक्तं षण्मृ(ड)ष्टौ वाऽल्पनासिकम् ॥ ३२ ॥
सर्वालंकारसंयुक्तमेतत्कल्याणसुन्दरम् ।
तदेव शिखरे चाध्य(र्ध)कोष्ठकं तु विवर्जयेत् ॥ ३३ ॥
चत्वारिनासिकोपेतं शिखरं परिकल्पयेत् ।
नानालंकारसंयुक्तमेतत्पाञ्चालमुच्यते ॥ ३४ ॥

तदेवाष्टाश्रमेदीयकंधरं शिखरं घनम् ।
शिरोष्टौ [ च ] महानासियुक्तं तद्विष्णुकान्तकम् ॥ ३५ ॥
सान्तरं प्रस्तरोपेतं कूटकोष्ठौ चतुश्चतुः ।
लम्बपञ्जरसंयुक्तं वृत्तशीर्षककंधरम् ॥ ३६ ॥
दण्डं वाऽध्यर्धदण्डं वा द्विदण्डं वा त्रिदण्डकम् ।
कर्णकूटं तु कोष्ठानि निष्क्रान्तं परिकल्पयेत् ॥ ३७ ॥
षड्भ्रनासिकोपेतं चत्वारि शिखरे वर ।
एतद्विश्वकरान्यस्यादीश्वरस्य प्रियावहम् ॥ ३८ ॥
तदेव त्रिचतुर्भागे भागाधिक्यं यथाक्रमम् ।
तथाऽशीषमकण्ठं चावेदिकं तत्प्रकल्पयेत् ॥ ३९ ॥
स्तूपित्रयसमायुक्तमेतन्मङ्गलमुच्यते ।
तदेवायतवृत्ताभं गान्धारमिति विद्यते ॥ ४० ॥
तारादर्धाधिकादर्धमायताश्रं समाश्रं वा ।
द्व्यश्रवृत्तमुपानादिकलितं वा तदेव हि ॥ ४१ ॥
समाश्रमायताश्रं वा बाह्यतः परिकल्पयेत् ।
वृत्तगर्भगृहोपेतं कूटकोष्ठम(क)संयुतम् ॥ ४२ ॥
वृत्ताभं कर्णकूटानां शीर्षं स्यात्परिकल्पयेत् ।
कूटकोष्ठाल्पनीडाश्च समसूत्रैश्च कल्पयेत् ॥ ४३ ॥
नाम्ना मनोहरं रम्यं सर्व(र्वे)देवार्हकं परम् ।
उपानादिस्तूपिपर्यंतं वृत्तं चेत्तु बहिर्बहिः ॥ ४४ ॥
शेषं प्रागिव कर्तव्यं शिवकान्तमिदं परम् ।
चतुरश्रमधिष्ठानं गर्भगेहं तथैव च ॥
अधिष्ठानोपरिष्टात्तु स्तूप्यन्तं वर्तुलाकृति ।
कूटकोष्ठादिसर्वाङ्गयुक्तं गर्भगृहं भवेत् ॥
चतुरश्रमधिष्ठानमायताश्रमथापि वा ॥ ४५ ॥
रसाश्रं शिखरं कण्ठं कूटकोष्ठादिसंयुक्तम् ।
यथोचितं तु संकल्प्य नाम्ना कूबेरकान्तकम् ॥ ४६ ॥
एवं तु द्वितलो(लं)योग्यं भेदमष्टदश स्मृतम् ।
इष्टकाभिः शिलाभिर्वा होमादिस्तूपिकान्तकम् ॥ ४७ ॥

कल्पितं सञ्चितं हर्म्यं पुमानिव घनीकृतम्।
दृष्टदेष्टकाभि(दृषद्भिरिष्टकाभिः) संमिश्रहर्म्यं तदेव हि ॥ ४८ ॥
श्र(ते)ष्वादौ द्वि षट्(ड्प)त्कार्यं तदूर्ध्वेष्विष्टका क्रिया।
इष्टकादारुहिं(सं)मिश्रं षण्डमेतदुदाहृतम् ॥ ४९ ॥
तदेवोपाचितं ख्यातं घनाघनमुदाहृतम्।
अशेषतरुभिः कार्यं संचितं स्त्रीति विद्यते ॥ ५० ॥
अघनं चेति तत्कार्यं एवं पुंषण्डयोषिताम्।
वक्त्रमण्टपमानं च गर्भगृहविशालकम् ॥ ५१ ॥
भित्तिव्यासं चतुः सर्वे (शालं)माग्वदेव तलोक्तवत्।
द्वारस्योभयपार्श्वे तु पादयोरन्तरे द्विज ॥ ५२ ॥
द्वारपालगुहां कुर्यात्तलादुत्तरसिंहकम्।
बिम्बांदितं द्विशालं च दण्डमात्रं तु वेशनम् ॥ ५३ ॥
सर्वधामनि कर्तव्यं तवेशा(प्रवेश)रहितं तु वा।
एवं द्वितलमाख्यातं त्रितलं तु ततो विदुः ॥ ५४ ॥

इति काश्यपशिल्पे द्वितलविधानोनामाष्टाविंशः पटलः।

---

अथ नवविंशः पटलः।

---

त्रितलम्।

---

अथ वक्ष्ये विशेषेण त्रितलं शृणु सुव्रत।
तस्य विस्तारमानं च पुरोक्तं हर्म्यमानकम् ॥ १ ॥
विन्याससूत्रयोरन्तरष्टाविंशे तु भाजिते।
एकांशं कूटविस्तारं शालायामं च तद्द्वयम् ॥ २ ॥
अंशं त्रिपादमर्धं वा पञ्च(ञ्ज)रव्याद(रव्यास) मुच्यते।
शेषं हारान्तरव्यानं निष्क्रान्तादीनि पूर्वकम् ॥ ३ ॥
ऊर्ध्वभूमिरसं शेषं कूटव्यासमुदाहृतम्।
शालायामाद्विभागं तु शेषं हारान्तरं भवेत् ॥ ४ ॥

हारान्तरं तु संपाद्यं त्रिपादं वाऽथ पञ्जरम् ।
ऊर्ध्वभूमित्रिभागैकं मध्यभद्रं विधीयते ॥ ५ ॥
दण्डं सार्धद्विदण्डं वा मध्यभद्रस्य नीव्रकम् ।
प्रासादस्योच्छ्रयं भानुद्विगुणांशं विभाजिते ॥ ६ ॥
द्विभागं भूतलोत्सेधं वेदांशं चरणोदयम् ।
मञ्चमानद्विभागेन पादोनं चतुरंशकैः ॥ ७ ॥
पादायां(नां)वक्लिसाध्यांशं प्रस्तरोच्चमुदाहृतम् ।
पादोच्चं सार्धत्र्यंशं सपादांशं तु मञ्चकम् ॥ ८ ॥
अर्धांशं वेदिकामानं गलमानं शिवांशकम् ।
सार्धाग्न्यंशं तु शिखरं स्तूप्युच्चं त्वेकभाजया ॥ ९ ॥
एवं हि कल्पितं गेहं शान्तिकक्षि(कं त्वि)ति विद्यते ।
चतुर्विंशति चायामे तलोच्चं तु द्विभागया ॥ १० ॥
वेदांशं चरणायामं पक्षांशं मञ्चमानकम् ।
पादोनचतुरंशं तु पादायाममितीष्यते ॥ ११ ॥
सार्धांशं प्रस्तरोत्सेधं साध्यर्धं हृदयं भवेत् ।
अर्धार्धांशं तु मञ्चोच्चमध्यांशं वेदिकोदयम् ॥ १२ ॥
शिवांशं ग्रीवमानं तु गुणांशं शिखरोदयम् ।
सपादांशं शिखामानं पौष्टिकं तदुदाहृतम् ॥ १३ ॥
सप्तविंशतिभागं तु कृत्वा च सदनोदयम् ।
द्विभागं धरातलोत्सेधं युगांशं चरणोदयम् ॥ १४ ॥
मञ्चमानं द्विभागेन वेदांशं चरणायतम् ।
पादोनद्व्यंशमञ्चोर्ध्वं तलिपोच्चं तु तद्द्वयम् ॥ १५ ॥
सार्धांशं प्रस्तरोत्सेधमेकांशं वेदिकोदयम् ।
द्विभागं ग्रीवमानं तु वेदभागं तु शीर्षकम् ॥ १६ ॥
शेषं स्तूप्युदयं ख्यातं जयदं तदुदाहृतम् ।
चत्वारिंशद्द्वयाधिक्यं भागं कृत्वा गृहोन्नतम् ॥ १७ ॥
अधिष्ठानत्रिभा[गा]र्धं सप्तांशं चरणोदयम् ।
तलोच्चसदृशं मञ्चं तलिपं सार्धषट्ककम् ॥ १८ ॥
गुणांशं प्रस्तरोत्सेधंभूभागं च षडंशकम् ।
सार्धद्व्यंशं तु मञ्चोच्चमेकांशं वेदिकोदयम् ॥ १९ ॥

गलमानं द्विभागं स्याद् भूतांशं शिखरोदयम् ।
द्विभागं स्तूपितुङ्गं तु प्रोक्तमुत्तुङ्गहर्म्यकम् ॥ २० ॥
प्रासादस्य तु तुङ्गेन षडष्टांशविभाजिते ।
अधिष्ठानयुगांशं तु वस्वंशं चरणायतम् ॥ २१ ॥
मञ्चमानं तु वेदांशं तली(लि)पं सार्धसप्तकम् ।
सार्धत्रिभागमञ्चोर्ध्वे सप्तांशं चरणायतम् ॥ २२ ॥
प्रस्तरोर्ध्वं गुणांशं तु शिवांशं वेदिकोदयम् ।
द्विभागं गलमानं तु रसांशं शिखरोदयम् ॥ २३ ॥
द्विभागं तु शिखामानमेवं स्यात्सर्वदेशिकम् ।
अष्टकूटाष्टशालाभिः कलापञ्जरसंयुतम् ॥ २४ ॥
दूर्णवत्यल्पनासाढ्यं जन्मादाग्रं युगांशकम् ।
नानाधिष्ठानसक्तानां नानापादैरलंकृतम् ॥ २५ ॥
शिखरे भानुनासाढ्यं महाश्रं चतुरष्टकम् ।
कूटकोष्ठोन्नतादीनि गारादाद्युचितं भवेत् ॥ २६ ॥
स्वस्तिकं भवनं ख्यातं तदेव शिखरे द्विज ।
चतुर्मु(र्म)हानासिकोपेत(नासिकाढ्य)मल्पाष्टकविवर्जितम् ॥ २७ ॥
स्वस्तिभद्रमिदं ख्यातं सर्वदेवप्रियावहम् ।
तदेव वृत्तशिखरं गलं वै वेदिका तथा ॥ २८ ॥
रुद्रकान्तमितिनां(दं ना)म्ना मम प्रीतिकरं परम् ।
तदेव शीर्षकोणेषु अल्पनासीद्वयान्वयम् ॥ २९ ॥
कल्पितं शिवकान्तं स्याच्छिवप्रीतिकरं गृहम् ।
तदेव वेदिका कण्ठं शीर्षकं च घटं तथा ॥ ३० ॥
वस्वश्र (श्रं)कल्पितं यत्तद्विष्णुकान्तमिदं परम् ।
विन्यासस्रूत्रयोरन्तं नवभागविभाजिते ॥ ३१ ॥
एकांशं कूटविस्तारं द्विभागं कोष्ठदीर्घकम् ।
कोष्ठं प्रति द्विकोष्ठं स्यादर्धांशं पञ्जरं ततः ॥ ३२ ॥
शेषहारान्तरं ख्यातं कल्पयेत्कल्पवित्तमः ।
चतुष्कूटाष्टशालांशं भानुपञ्जरसंयुतम् ॥ ३३ ॥
तं चा(तच्चा)ल्पनासिकोपेतं वस्वश्रं शीर्षकं गलम् ।
महानासाष्टकोपेतं शिखरं तद्द्विजोत्तम ॥ ३४ ॥

नाम्ना शुद्धमिमानं तु धर्मप्रीतिकरं भवेत् ।
तदेवाष्टाश्रवेदी तु वि(वृ)त्ताभं शिखरं गलम् । ३५ ॥
विमानाकृतिनाम्नातं सर्वदेवार्हकं भवेत् ।
तदेव शिखरं कण्ठं युगाश्रं ब्रह्मकान्तकम् ॥ ३६ ॥
तदेव सायताग्रं तु सपादं सत्रिभागिकम् ।
वसुभागं तु विस्तारमायामं दशधा भजेत् ॥ ३७ ॥
एकांशं कूटविस्तारं शालाया द्विगुणायतम् ।
शेषं हारान्तरं ख्यातं प्रागिवैव प्रकल्पयेत् ॥ ६८ ॥
षड्ष्टभागविस्तारमायामं चोर्ध्वभूमिके ।
एकांशं कूटविस्तारं कोष्ठदीर्घं त्रियंशकम् ॥ ३९ ॥
अर्धांशं पञ्जरं व्यासं शेषं हारान्तरं भवेत् ।
ऊर्ध्वभूमीविस्तृतं च प्री(चाग्नि)भाकैकं ध्य(गैःकण्ठ)भद्रकम् ॥४०॥
द्व्यंशवृत्तं च वेदी च कष्ठ(ण्ठं)वै शीर्षकं तथा ।
चतुष्कूटाष्टशाला(लं) च भानुपञ्जरसंयुतम् ॥ ४१ ॥
हारान्तरं चतुर्विंशत्कल्पयेदादिभूतले ।
चतुष्कूटं चतुःशालं पञ्जराष्टकसंयुतम् ॥ ४२ ॥
षोडशान्तरसंयुक्तं शतसंख्याल्पनासिका(कम्) ।
ललाटं नासिकायुक्तं पार्श्वयोर्भद्रनासिका ॥ ४३ ॥
तथैव नासिका पृष्ठे पृष्ठे शिचोपमाचरेत् ।
नानाधिष्ठानसंयुक्तं नानाचाङ्घ्रिसमायुतम् ॥ ४४ ॥
सर्वालंकारसंयुक्तं हस्तिपृष्ठमिदं भवेत् ।
मानसूत्रान्तरं व्यासं नवभागविभाजिते ॥ ४५ ॥
गुणांशं गर्भगेहं तु शिवांशं कुड्यविस्तृतम् ।
परितोऽलींद्र(लिन्द्र)मेकांशं हारं व्यासं शिवांशकम् ॥ ४५ ॥
एवं हि कल्पतेते(येत्ते)षु कण्ठकूटं शिवांशकम् ।
मध्ये कोष्ठं गुणांशं स्यादेकांशः पञ्जरस्ततः ॥ ४७ ॥
हारान्तरं तदर्धांशं कल्पयेवं प्रथमे भुवि ।
अथवा पञ्जराणां तु अर्धांशं वा विधीयते ॥ ४८ ॥
शेषं हारान्तरं ख्यातं परितस्त्वेवमाचरेत् ।
कोष्ठमध्ये त्रिदण्डेन महानासित्रिनिर्गतम् ॥ ४९ ॥

ऊर्ध्वभूमौ षडंशेषं (षु) कूटकोष्ठायतद्वयम्।
अर्धांशं पञ्जरव्यासं शेषं हारान्तरं भवेत्॥ ५०॥
ऊर्ध्वभूमीविस्तृतार्थंतु अ(र्धं त्व)र्धदण्डेन निस्थितैः(र्गतम्)।
चतुरश्रमधिष्ठानं वस्वश्रं शीर्षकं गलम्॥ ५१॥
आदौ तले चतुष्कर्णे कूटो वेदाश्रशीर्षकः।
अष्टाश्रं शीर्षकं कूटश्चोर्ध्वभूमौ प्रकल्पयेत्॥ ५२॥
अष्टकूटाष्टकोष्ठं च कलापञ्जरसंयुतम्।
शतोल्पनासिकोपेतं शिखरेन्द्रं महान्तरम्॥ ५३॥
भद्रकोष्ठमिदं नाम्ना सर्वदेवार्हकं परम्।
तदेव कर्णकूटानां शीर्षकं वर्तुलाकृति॥ ५४॥
प्रासादशीर्षकं कण्ठं वृत्ताकारं प्रकल्पयेत्।
शिखरे तु चतुर्दिक्षु भद्रनासीसमन्वितम्॥ ५५॥
तथा दिक्षल्पनासाढ्यं वृत्तकूटमिदं परम्।
तदेव शिखरे कोणे क्षुद्रनासाष्टकान्वितम्॥ ५६॥
युगाश्रं कर्णकूटानां शीर्षकं परिकल्पयेत्।
शेषं प्रागिव कर्तव्यं श्रीकण्ठं तदुदाहृतम्॥ ५७॥
तदेवाष्टांशमाधिक्यमायामं चतुरश्रकम्।
शालामध्ये महानासि भद्रं हीनं प्रकल्पयेत्॥ ५८॥
शालाभं मस्तकं कण्ठं वृत्ताम्यतमथापि वा।
क्षु(स्तु)पित्रयसमायुक्तमेतन्नाम्ना सुमङ्गलम्॥ ५९॥
मानसूत्रान्तरं धर्मं भागं कृत्वा द्विजोत्तम।
गर्भगेहं तु वेदांशं गृहं पिण्ड्यंशमावृतम्॥ ६०॥
परितोऽलिंदु(लिन्द्र)मेकांशं हारभागेन कल्पयेत्।
तदेकं कूटविस्तारं मध्ये तोष्ठप(कोष्ठाय)तद्वयम्॥ ६१॥
तयोर्मध्यैकभागेन पञ्जरव्यासमुच्यते।
हारान्तरं तथांऽशेन पञ्जरस्य तु पार्श्वयोः॥ ६२॥
अष्टांशा चोर्ध्वभूमिं तु कृत्वांऽशं कूटविस्तृतम्।
शालाया द्विगुणायामं तयोर्मध्ये तु पञ्जरम्॥ ६३॥
एकांशेनैव कर्तव्यं शेषं हारान्तरं भवेत्।
ऊर्ध्वभूमि चतुर्भागं द्विभागं मध्यभद्रकम्॥ ६४॥

दण्डं वा द्विदण्डं वा त्रिदण्डं वाऽथ निर्गतिः ।
वेदाश्रं तदधिष्ठानं तद्वत्कण्ठं च शीर्षकम् ॥ ६५ ॥
अष्टशालाष्टकूटं च पञ्जरं षोडशान्वितम् ।
नानाधिष्ठानसंयुक्तं नानापादैरलंकृतम् ॥ ६६ ॥
उन्नतौ कूटकोष्ठौ च भान्तरप्रस्तरान्वितौ ।
गान्धारमिति विख्यातमष्टाश्रं वा गलं शिरः ॥ ६७ ॥
श्रीविशालमिति ख्यातं वर्तुला वेदिका गलम् ।
शीर्षं चैव च कर्तव्यं शेषं पूर्ववदाचरेत् ॥ ६८ ॥
श्रीभागाढ्यमिति ख्यातं सर्वदेवार्हकं परम् ।
वृत्ते वृत्तायते द्व्यश्रवृत्ते चैव षडश्रके ॥ ६९ ॥
कूटकोष्ठादिसर्वाङ्गं प्रागिवैव प्रकल्पयेत् ।
वर्षस्त(क्षःस्थ)लं मण्डलं च त्यजेत्कर्णं च शीर्षकम् ॥ ७० ॥
वक्षःस्थलविहीनानां क(नाम)कर्णं शीर्षसंयुतम् ।
कूटकोष्ठादिसर्वाङ्गमुचितं नागरादिकम् ॥ ७१ ॥
नानालंकारसंयुक्तं नानाचित्रैर्विचित्रितम् ।
गर्भगेहं विशालं च गृहं पिण्ड्यग्रमण्डपम् ॥ ७२ ॥
एकभूमिविधानोक्तमप्युक्तानां विशेषतः ।
त्रितलं ह्येवमाख्यातं चतुर्भूममथोच्यते ॥ ७३ ॥

इति काश्यपशिल्पे त्रितलविधानं नामैकोनत्रिंशः पटलः ।

---

अथ त्रिंशः पटलः ।

---

चतुर्भूमिः ।

---

अथ वक्ष्ये विशेषेण चतुर्भूम्यादिलक्षणम् ।
विस्तारोत्सेधमानं तु प्रोक्तं प्रासादमानके ॥ १ ॥
ख्यंशमानसूत्रं वा कृते गर्भगृहांशकम् ।
गृहपिण्ड्यलिन्द्राहारं प्रत्येकं चैकभागतः ॥ २ ॥

विन्यासमूत्रयोरन्तर्वसुधामभजेवह(द्व)म् ।
कर्णकूटस्वतांशं तु कोष्ठं तद्द्विगुणायतम् ।। ३ ।।
पञ्च(ञ्ज)रव्यासमंशेन शेषं सा(हा)रान्तरं भवेत् ।
पुनरप्यूर्ध्वभूमिं च वसुभागविभाजिते ।। ४ ।।
कर्णकूटं च कोष्ठं च पञ्जरं पूर्ववत्त्र्येत् ।
तदूर्ध्वभूमौ षड्भागे शिवांशं कूटविस्तृतम् ।। ५ ।।
कोष्ठायामश्वरी(धरा)भागमर्धांशं पञ्जरस्य तु ।
शेषं हारान्तरं प्रोक्तं हीनाधीकां(क्यं) तु नाऽऽश्रयेत् ।। ६ ।।
उर्ध्वभूमानि(मिवि)भागेन क्योमां(म्ना)मर्धमभद्रकम् ।
दण्डं वाऽध्यर्धदण्डं वा द्विदण्डं वाऽथ निर्गमम् ।। ७ ।।
प्रासादोच्चं तु विभजेत्सप्तत्रिंशदंशकम् ।
सार्धाष्टांशमधिष्ठानं भूतांशं चरणोदयम् ।। ८ ।।
अधिष्ठानसमं मञ्चं पादं पादोनप(म)ञ्चकम् ।
दा(प)क्षांशं कर्ममञ्चोच्चं कल्पयेद्द्विजसत्तम ।। ९ ।।
सार्धं वेदांशमपरं पक्षांशं प्रस्तरोदयम् ।
सपादवेदभागं च चरणोदयमिष्यते ।। १० ।।
पादोनपक्षांशमञ्चोच्चं शिवांशं वेदिकोदयम् ।
कण्ठोच्चं तु द्विभागं स्यात्सार्धं वेदांशशीर्षकम् ।। ११ ।।
स्तूप्युच्चं तु द्विभागं स्याच्छान्तिकं भवनं भवेत् ।
चत्वारिंशद्द्वयाधिकां(क्यं) भागं कृत्वा गृहोन्नतम् ।। १२ ।।
गुणांशं तलमानं तु रसांशं चरणोदयम् ।
प्रस्तरं त्वग्निभागेन भूतांशं तलिपोदयम् ।। १३ ।।
गुणांशं प्रस्तरोत्सेधं पादं पादार्धपञ्चकम् ।
पादद्विभागमञ्चोच्चं सार्धवेदाङ्घ्रिणोदयम् ।। १४ ।।
द्विभागं मञ्चमानं तु शिवांशं वेदिकोदयम् ।
अत्यर्धांशं गलोत्सेधं युगांशं शिखरोदयम् ।। १५ ।।
द्विभागं तु शिखामानं पौष्टिकं तदुदाहृतम् ।
पञ्चांशं द्वि(वि)भजेद्धर्म्यं तुङ्गं स्तूप्यवसानकम् ।। १६ ।।
साधाग्न्यंशमधिष्ठानं सप्तांशं चरणोदयम् ।
गुणार्धं प्रस्तरोत्सेधं रसांशं पाददैर्घ्यकम् ।। १७ ।। PG

गुणांशं मञ्चमानं तु ऊर्ध्वपादं तु तद्द्वयम् ।
त्रिभागं प्रस्तरोत्सेधं पादोच्चं सार्धपञ्चकम् ॥ १८ ॥
प्रस्तरोच्चं त्रिभागैकं शिवांशं वेदिकोदयम् ।
द्विभागं गलमानं तु भूतांशं शिखरोदयम् ॥ १९ ॥
सार्धांशं स्तूपिमानं तु जयदं तदुदाहृतम् ।
उपानादिस्तूपिपर्यन्तं पञ्चांशं विभजेद्बुधः ॥ २० ॥
तथोच्चं सार्धाग्न्यं(ग्न्यशं) स्यात्सप्तांशं चरणोदयम् ।
तलोच्चसदृशं मञ्चं तस्य(लि)पं सार्धषट्ककम् ॥ २१ ॥
पादाधिकत्रिभागेन मञ्चमानमुदाहृतम् ।
पादोच्चं रसभागेन गुणांशं प्रस्तरोदयम् ॥ २२ ॥
सार्धपञ्चांशमभ्युच्चं मञ्चं सार्धद्विभागतः ।
एकांशं वेदिकामानं द्विभागं स्याद्गलोदयम् ॥ २३ ॥
पञ्चांशं शिखरोत्तुङ्गं पादद्वयंशं शिरो(खो)द्गमम् ।
तद्भूतं सदनं श्रेयं कल्पयेत्कल्पवित्तमः ॥ २४ ॥
आरामोच्चं तु पञ्चांशं भागं कृत्वा विभेदतः ।
सार्धाब्धांशमधिष्ठानं धात्वंशं चरणोदयम् ॥ २५ ॥
प्रस्तरोच्चं त्रिभागैकं चरणं सार्धषड्भवेत् ।
सपादाग्न्यंशमञ्चं स्यात्तली(लि)पं सार्धषट्ककम् ॥ २६ ॥
त्रिभागं प्रस्तरोत्सेधं पादोच्चं सार्धपञ्चकम् ।
पादोनाग्न्यंशमञ्चोच्चं शिवांशं वेदिकोदयम् ॥ २७ ॥
द्विभागं गलमानं तु पञ्चांशं शिखरोदयम् ।
व्योमांशं तु शिखामानं विमानं सार्वदेशिकम् ॥ २८ ॥
होमादिस्तूपिपर्यन्तं वेदाश्रं परिकल्पयेत् ।
भानुकूटं तथा कोष्ठं भानुद्विगुणपञ्जरम् ॥ २९ ॥
शिखरे तु चतुर्दिक्षु भद्रनासीचतुष्टयम् ।
पादं प्रत्यल्पनासाढ्यं शिखरेऽष्टाल्पनासिकम् ॥ ३० ॥
कूटकोष्ठादिसर्वाङ्गं नागराद्युचितं कुरु ।
एकाकारतलस्तम्भं सुभद्रमिति विश्रुतं ॥ ३१ ॥
तदेव शिखरेऽष्टाल्पनासिकारहितं भवेत् ।
तद्भद्रमिति विख्यातं सर्ववेद(देव)प्रियावहम् ॥ ३२ ॥

तदेव शिखरे व्यण्डवृत्तं श्रीकान्तमुच्यते ।
चतुरश्रं शीर्षकण्ठं वै श्रीमण्डनमुदाहृतम् ॥ ३३ ॥
तदेव शिखरं चाष्टौ (ष्ट)महानासिसमन्वितम् ।
श्रीभवनं च व्यासव्यासं शालाभद्रयुतं तु वा ॥ ३४ ॥
विभद्रं वाऽथ भक्तव्यं सर्वेषां सद्मनामपि ।
श्रीकान्तं शिखरेऽष्टाल्पनासा(सा)ढ्यं श्रीविशालकम् ॥ ३५ ॥
नानाऽङ्घ्रितलयुक्तास्ते तत्तन्नाम्ना प्रकीर्तिताः ।
विस्ताराढ्य....मंसं भास्करं तु विशीर्षकम् ॥ ३६ ॥
सर्वदालयमित्युक्तं सर्वदेवार्हकं परम् ।
मानभूमान्तमानन्दभागं कृत्वा विशेषतः ॥ ३७ ॥
गर्भगेहं गुणांशं स्याद्भागेन गृहपिण्डिका ।
अलिन्द्रांशे तु कर्तव्यं भा(हा)रभागेन कल्पयेत् ॥ ३८ ॥
ततो विन्यासपर्यन्तं व्यासं नन्दविभाजिते ।
एकांशं कूटविस्तारं गुणांशं कोष्ठदीर्घकम् ॥ ३९ ॥
एकांशं पञ्जरव्यासमर्धांशं हरयाऽन्तरम् ।
शालामध्ये महानासि निवृत्तं त्वर्धभागया ॥ ४० ॥
ऊर्ध्वभूमा(न)न्दभागे तु कूटमंशेन कल्पयेत् ।
शालाया(द्) द्विगुणायामं(मा)शिवांशं पञ्जरं भवेत् ॥ ४१ ॥
शेषं हारान्तरं चोर्ध्वे भूतारं रसभाजिते ।
कूटमेकेन कर्तव्यं कोष्ठं तद्द्विगुणायतम् ॥ ४२ ॥
अर्धांशं पञ्जरव्यासं शेषं हारान्तरं भवेत् ।
ऊर्ध्वभूमिं तथाऽर्धं तु मध्यदण्डेन निर्गतिम् ॥ ४३ ॥
चतुरष्ट श्रवृत्ताभं कूटानां शीर्षकं क्रमात् ।
कर्करीदण्डवत्कोष्ठं स्वश्रं हर्म्यादिशीर्षकम् ॥ ४४ ॥
महानास्यष्ट(ष्ट)कोपेतं शीर्षकं परिकल्पयेत् ।
रविकोष्ठं च कूटं च रविद्विगुणपञ्जरम् ॥ ४५ ॥
भागिवोच्चांशमानं तु ततः कोष्ठमिदं परम् ।
गेहव्यासं तु वभांशं कृत्वा नीचगृहच्छतुः (होच्चकम्) ॥ ४६ ॥
गृहपिण्डांशमानेन आलिन्द्रं त्वेकभागया ।
हाराप्या(रव्या)सं शिवांशेन परितः परिकल्पयेत् ॥ ४७ ॥

विन्याससूत्रयोरन्तर्व्यासधर्मविभाजिते ।
कर्णकूटं तदेकांशं कोष्ठायामं तु तद्द्वयम् ॥ ४८ ॥
अर्धांशं पञ्जरव्यासं शेषं हारान्तरं भवेत् ।
चतुष्कूटाष्टकोष्ठं च पञ्जारम्भं तु संख्यया ॥ ४९ ॥
हारान्तरं चतुर्विंशत्कल्पयेत्प्रथमं तलम् ।
आलिन्द्रं जलपादं स्यात्प्रस्तारं तु घनीकृतम् ॥ ५० ॥
ऊर्ध्वभूनवभागं स्याच्छिवांशं कूटविस्तरम् ।
कोष्ठं तद्द्विगुणायामं पञ्जरं शममानतः ॥ ५१ ॥
शेषं हारान्तरं ख्यातं क्षुद्रपञ्जरसंयुतम् ।
ऊर्ध्वभूमित्रिभागैकं मध्ये दण्डेन निर्गमम् ॥ ५२ ॥
चतुरश्रमधिष्ठानमष्टाश्रं मस्तकं गलम् ।
शिखरेऽष्टौ महानासि(स्यः) पादे प्रत्यल्पनासिका ॥ ५३ ॥
कर्णकूटं तु भागं स्यात्कोष्ठं षोडशभिर्युतम् ।
नतकूटोन्नतं कोष्ठमन्तरप्रस्तरान्वितम् ॥ ५४ ॥
क्षुद्रनीड षड्विंशं स्यान्नानास्त्रं सूकराननचा(कृति) ।
नानाचित्रैर्विचित्रं तु तुङ्गं भागं तु पूर्वकम् ॥ ५५ ॥
जयावहमिदं ख्यातं सर्वदेवार्हकं परम् ।
तदेव वर्तुलं कर्णं शीर्षान्तं सर्वमामि(नि)कम् ॥ ५६ ॥
तदेव सान्तरं मञ्चं कूटकोष्ठं च पञ्जरम् ।
कूटानां शीर्षकस्तूपिकुम्भं कर्णं च वर्तुलम् ॥ ५७ ॥
एवं स्यान्मूलभूमौ तु वस्वश्रं मध्यमे तले ।
युगाश्रं मध्यभूमौ तु कर्णकूटं प्रकल्पयेत् ॥ ५८ ॥
सुखावहमिदं ख्यातं सर्वदेवार्हकं परम् ।
तदेव कूटकोष्ठं च अन्तरं प्रस्तरं विना ॥ ५९ ॥
व्यासोच्चसमसूत्रं तु सदस्(राज)यगृहं भवेत् ।
तदेव शिखरं कण्ठं युगाश्रं धारकान्तकम् ॥ ६० ॥

इति काश्यपशिल्पे चतुर्भूमिविधानो नाम त्रिंशः पटलः ।

## अथैकत्रिंशः पटलः ।

---

वक्ष्येऽहं कूटकोष्ठानां पञ्जराणां तु लक्षणम् ।
द्वितलादितलान्तानां सममेव प्रकीर्तितम् ॥ १ ॥
तले प्रत्युदितं व्यासं समाश्रं कर्णकूटकम् ।
सार्धनाश्रं तु कोष्ठं स्याच्चतुष्पादैकपादुकौ ॥ २ ॥
अधस्तात्स्तम्भवर्गं च प्रस्तरः कर्णशीर्षकम् ।
स्तूपिवर्गसमायुक्तौ कूटकोष्ठौ विशेषतः ॥ ३ ॥
एवं चाऽऽदितले कुर्याद्धारातालं विनोर्ध्वतः ।
कूटशालौ च कर्तव्यौ पञ्जराश्च तथैव च ॥ ४ ॥
ऊर्ध्वपादोदयं सप्तभागं कुर्याद्विशेषतः ।
एकांशं वेदिकोत्सेधं सार्धांशं गलमुन्नतम् ॥ ५ ॥
शीर्षं तु द्विगुणांशेन शेषं स्तूप्युदयं भवेत् ।
एवं तु कूटकोष्ठौ द्वौ कल्पयेत्तु तलं प्रति ॥ ६ ॥
अथवा कूटकोष्ठानामुदयं तु वदाम्यहम् ।
प्रस्तरस्योर्ध्वसीमान्तं हंसमालोर्ध्वसंम(सिंह)कम् ॥ ७ ॥
कपोतं वावसानं वा भागं पूर्ववदेव तु ।
सान्तिरप्रस्तरं चेत्तु प्रस्तरस्योर्ध्वसीमकम् ॥ ८ ॥
वेदिकोर्ध्वं समा(मं)त्राऽथ सान्तरप्रस्तरान्वितः(तम्) ।
तदुच्चं रुद्रधा भज्य एकांशं वेदिकोदयम् ॥ ९ ॥
गुणांशं चरणोच्चं तु पादोनद्व्यंशमञ्चकम् ।
स्तूप्युत्सेधं सपादांशं क्रमशः परिकल्पयेत् ॥ १० ॥
एवं हि कूटकोष्ठौ द्वौ कल्पयेच्छिल्पवित्तमः ।
कूटस्यास्य त्रिभागैकं स्वनासीविस्तृतं भवेत् ॥ ११ ॥
तद्व्यासत्रिचतुःपञ्चसप्तभागेन नीव्रकम् ।
कर्णकूटे कपोतं तु नासिकानिर्गमं भवेत् ॥ १२ ॥
चतुर्दिक्षु चतुर्नासि(नासीः)कूटानां परिकल्पयेत् ।
एकस्तूपिसमायुक्तं नीव्रवेशविमानवत् ॥ १३ ॥

तदेवाश्रं वसुकोणं वा वृत्ताभं वा ग(ा) शिरः ।
नागराद्युचितं कल्प्यं कर्णकूटं (टं)विशेषतः ॥ १४ ॥
शालानां पार्श्वयोर्विम ललाटाख्यं(ख्या)तु नासिका ।
शाला व्यासविशाला तु उन्नता मुखपट्टिका ॥ १५ ॥
स्वस्तूप्यग्रसमं प्रोतं शालानास्यप्रशी(सी)मकम् ।
शालादैर्घ्यं त्रिभागैकं मुखनासिविशालकम् ॥ १६ ॥
कूटानां नासिकानीव्रं महानासिवदाचरेत् ।
स(स्तू)पित्रयसमायुक्तं नागरे भवने द्विज ॥ १७ ॥
का(शा)लानां द्राविडानां तु स्तूपिस्याक्षिखशिसंज्ञ(द्विद्वित्रिसंख्य)या ।
शालानां वेसराणां तु स्तूप्येकं वा चतुष्टयम् ॥ १८ ॥
गलांशे कूटकोष्ठानां देवताद्यास्तु कल्पयेत् ।
एवं हि कूटकोष्ठस्तु पञ्जरस्त्वधुनोच्यते ॥ १९ ॥
उपानाद्युत्तरान्तं तु नवभागविभाजिते ।
उपपीठमथांशेन पक्षांशेन धरातलम् ॥ २० ॥
वेदांशं चरणायामं मञ्चमध्यर्धभागया ।
अर्धांशं वेदिकामानं कपोतान्तं गलोदयम् ॥ २१ ॥
प्रतिवाजनसीमान्तं पञ्जरोच्चमुदाहृतम् ।
प्रासादस्य कपोतं तु यथाशोभां विनिर्गतिः ॥ २२ ॥
पञ्जरो नासिकाकारः कूटकोष्ठाकृतिस्तु वा ।
हस्तिपृष्ठविमानं स्याच्छिखरान्तमथापि वा ॥ २३ ॥
एवं त्वनेकभेदेन पञ्जराकृतिरुच्यते ।
यथेष्टं तेषु कर्तव्यं हर्म्यकोष्ठेषु हर्म्यकम् ॥ २४ ॥
एकेन भूमिहर्म्येषु .... .... ...
एवमादितले(लं )कुर्यादन्तरप्रस्तरान्वितम् ॥ २५ ॥
मानसूत्रं तु निष्क्रान्तं युक्तमेव यदाचरेत् ।
पञ्जरं नीव्ररहितं प्रस्तरोर्ध्वे विशेषतः ॥ २६ ॥
कर्णकूटं समं वाऽथ त्रिपादं वाऽवधिस्तरम् ।
तद्व्यासभद्रशं (कं )तुङ्गं युक्तया पञ्जरमाचरेत् ॥ २७ ॥

तलं मत्यूर्ध्वपादोर्ध्वं प्रागिवैव नवांशकम्।
गुणांशं वा घनं भित्तिश्छत्रं शीर्षसमं युगम् ॥ २८ ॥
पादायामं चतुर्भागमत्यर्धांशं तु प्रस्तरम्।
अर्धांशं वेदिकामानं कपोतान्तं गलोदयम् ॥ २९ ॥
प्रतिवाजनसीमान्तं पञ्जरोदयमीरितम्।
शेषं प्रागिव कर्तव्यमेवं निष्क्रान्तपञ्जरम् ॥ ३० ॥
निष्क्रान्तरहितं चेत्तु प्रस्तरोर्ध्वं तु वागिव(जनम्)।
पञ्जरे कूटकोष्ठौ च पादे पादान्तरेऽपि वा ॥ ३१ ॥
गोपानभारिताकल्पमहाशालपरक्रमात्।
हस्तौ पादौ द्वयोपेतां दृष्टकीर्णजटान्विताम् ॥ ३२ ॥
रौद्रदृष्टिसमायुक्तां नृत्ताञ्जनसंनिभाम्।
गोपानं यत्नतो धृत्वा पादौ हस्तौ तदान्वितौ ॥ ३३ ॥
एवं वा गजहंसाभं वसिंहव्यालोह(लाभ)वं वा।
गोपानं शिरसाऽन्यं हस्तपादौ यथेष्टगौ ॥ ३४ ॥
कूटादिलक्षणं प्रोक्तं पञ्चभूमिविधिं ततः ॥ ३५ ॥
इति काश्यपशिल्पे कूटादिलक्षणमेकत्रिंशः पटलः।

---

## अथ द्वात्रिंशः पटलः।

---

### पञ्चभूमिः।

---

अथ वक्ष्ये विशेषेण पञ्चभूम्यास्तु लक्षणम्।
विस्तारोत्सेधमानं तु प्रोक्तं प्रासादमानके ॥ १ ॥
विस्तारं रुद्रया भज्य गुणांशं गर्भगेहकम्।
द्विभागं गृहपिण्डी स्यादलिन्द्रं त्वेकभागया ॥ २ ॥
हारभाग(गा)नेक(त्र) कर्तव्यमलिन्द्रघनभित्तिकम्।
वर्षस्थलसमं युक्तं कल्पयेत्प्रस्तरोपरि ॥ ३ ॥
धरातले त्व(त्र)मध्योर्ध्वे द्वितीये वा त्रिभूमिके।
केवलास्थपनं कुर्यात्तावदेव घनीकृतम् ॥ ४ ॥

विन्याससूत्रयोरन्तः, रुद्रभागविभाजिते ।
शिवांशं कर्णकूटं तु मध्यकोष्ठं गुणांशकम् ॥ ५ ॥
तयोर्मध्यैकभागेन पन्त(ञ्ज)रुयासमुच्यते ।
हारान्तरमथांशेन कल्पयेत्कल्पवित्तमः ॥ ६ ॥
तदूर्ध्वभूमिविस्तृतं नन्दभागं कृत्वांश(तु )मौलिकम् ।
मध्ये कोष्ठाग्निभागं तु पञ्जरं स्वंशमानतः ॥ ७ ॥
हारान्तरमथार्धांशं कल्पयेत्तु द्वितीयके ।
तदूर्ध्वभुवनं चाष्टभागांशं कर्णकूटकम् ॥ ८ ॥
द्विभागं कोष्ठकं कुर्याद्भागं (गः)स्यात्पञ्जरस्तथा ।
हारान्तरमथार्धांशं कृत्वा लक्षणसंयुतम् ॥ ९ ॥
ऊर्ध्वभूमिरसांशे तु कूटन्यासमथांशकम् ।
शालादीर्घविभागं स्याद्दुग्धा(दर्धा)शं पञ्जरस्तरम् ॥ १० ॥
शेषं हारान्तरं ख्यातं बलकुञ्जरमेव वा ।
तदूर्ध्वे भूमिनिन्न्यास्यं (विन्यासं) मध्ये दण्डेन निर्गतिः ॥११॥
गृहोच्चं तु षडष्टांशे पादोनांशं धरातलम् ।
सार्धपञ्चांशमप्युच्चं सार्धद्वयंशं तु मञ्चकम् ॥ १२ ॥
सपादं पञ्चभागं तु चरणोदयमीरितम् ।
मञ्चोच्चं द्वयमर्धांशं पञ्चांशं चरणायतम् ॥ १३ ॥
सपादद्विभाग(गं) मञ्चं स्यात्पा(प)दामर्धेन पञ्जरकम् ।
द्विभागं प्रस्तरोत्सेधं सार्धवेदाङ्घ्रितुङ्गकम् ॥ १४ ॥
पादोनद्वयंशमञ्चः स्याच्छिवांशं वेदिकोदयम् ।
कण्ठं वा तेन पक्षांशं सार्धवेदं शिरोदयम् ॥ १५ ॥
द्विभागं स्तूपिमानं तु शान्तिकं भवनं भवेत् ।
सवेदचत्वारिंशं तु भागं कृत्वा गृहोन्नतम् ॥ १६ ॥
गुणांशं तलतुङ्गं तु भूतांशं चरणोदयम् ।
प्रस्तरं चाग्निभागं तु पादं सार्धयुगं भवेत् ॥ १७ ॥
सपादद्विभागमञ्चं स्यात्तलिपं स्यादर्धा(स्यादधो)युगम् ।
प्रस्तरोच्चं द्विभागेन वेदांशं चरणोदयम् ॥ १८ ॥
पक्षांशं मञ्चमानं स्यात्पादं सार्धगुणांशकम् ।
अध्यर्धमञ्चमानं तु व्योमांशं वेदिकोदयम् ॥ १९ ॥

द्विभागं गलमानं तु सार्धं वेदांशशीर्षकम् ।
अत्यन्धं (र्धं) तु शिखामानं पौष्टिकं सदनं त्विदम् ॥ २० ॥
सदनोच्चे तु षट्त्रिंशद्भागं कृत्वा द्विजोत्तम ।
अधिष्ठानं द्विभागेन वेदांशं चरणायतम् ॥ २१ ॥
सत्रिपादत्रिवांशेन मञ्चमानं प्रकल्पयेत् ।
सार्धाग्न्यंशं तु तलिपं तदर्धं मञ्चमानकम् ॥ २२ ॥
सपादानलपादं स्यान्मञ्चमत्यर्धभागया ।
गुणांशं पादपीठं तु सपादांशं [तु] प्रस्तरम् ॥ २३ ॥
एकांशं वेदिकामानं पादोनद्व्यंशकं गलम् ।
सपादाग्न्यंशशिरोषे(कं शीर्षे शे)षं स्तूप्युदयं भवेत् ॥ २४ ॥
जयदं भवनं ह्येवं कल्पयेत्स्थपतिसत्तमः ।
विमानोत्सेधं विभजेच्चत्रिंशद्विभागया ॥ २५ ॥
द्विभागं रमणीमानं वेदांशं चरणोदयम् ।
प्रस्तरोर्ध्वं द्विभागेन सार्धत्रिंशाङ्घ्रिणोदयम् ॥ २६ ॥
प्रस्तारं पादरहितं द्विभागेन विधीयते ।
त्रिभागं चरणायामं तदर्धं मञ्चमानकम् ॥ २७ ॥
सार्धद्विभागपादोर्ध्वे सपादांशेन मञ्चकम् ।
स्तम्भं पादाधिकद्व्यंशं मञ्चमानं सपादकम् ॥ २८ ॥
व्योमांशं वेदिकामानमत्यर्धांशगलमानकम् ।
सार्धत्रिभागं शिखरं द्विभागं स्तूपिमानकम् ॥ २९ ॥
अद्भुतं भवति ह्येवं कल्पयेद्देवताहेकम् ।
चतुर्विंशतिभागं तु कृत्वा च सदनोदयम् ॥ ३० ॥
अत्यर्धांशतलोत्सेधं गुणांशं पादमानकम् ।
तदर्धं मञ्चमानं तु पादोदर्कं(यं)गुणांशकम् ॥ ३१ ॥
तस्यार्धं प्रस्तरोत्सेधं द्व्यर्धमङ्घ्र्युदयं भवेत् ।
प्रस्तरं तु सपादांशं स्तम्भं पादाधिकद्वयम् ॥ ३२ ॥
तदर्धं मञ्चमानं तु साष्टांशद्व्यंशमङ्घ्रिकम् ।
एकांशं प्रस्तरोत्सेधमर्धांशं वेदिकोदयम् ॥ ३३ ॥
त्रिपादं गलमानं तु पादोनद्व्यंशकं शिरः ।
अष्टांशरहितव्योमभागं स्तूप्युदयं भवेत् ॥ ३४ ॥

सर्वकामिकमेवं तु कर्तव्यं सदनं द्विज ।
होमादिस्तूपिपर्यन्तं युगाश्रं परिकल्पयेत् ॥ ३५ ॥
कलाशालाकलासौष्ठी पञ्जरं चतुरष्टकम् ।
पादाः प्रत्यस्त्पनासाढ्यं(ढ्या)हारान्तं नासिकाद्वयम् ॥ ३६ ॥
भद्रनासीचतुष्कं तु शिखरे च प्रकल्पयेत् ।
क्षुद्रनासीद्वयं कोणे कल्पितं ब्रह्मकान्तकम् ॥ ३७ ॥
कूटास्व(टेष्व)नन्तरं चाढ्यं (साढ्यं च)माजापत्यमुदाहृतम् ।
तदेवोन्नतकूटं तु कोष्ठेऽनन्ताः स्वमश्रकाः ॥ ३८ ॥
स्वायंभुवमिदं गेहं सर्वदेवार्हकं परम् ।
तदेव वेदिकाकोष्ठं शीर्षकं वसुकोणकम् ॥ ३९ ॥
शालामध्येऽसमासेऽन्तर्निर्गतिः कोष्ठ एव वा ।
भद्रकान्तमिति ख्यातं कूटकोष्ठं परिस्समम् ॥ ४० ॥
समश्रं वाऽपि(प्य)मश्रं वा जनार्दनमुदाहृतम् ।
तदेव कोष्ठमध्ये तु भद्रहीनमथापि वा ॥ ४१ ॥
मध्ये द्रयुतं वाऽपि मण्डलं शीर्षकं गलम् ।
अतिभद्रमिति ख्यातं सर्वदेवार्हकं परम् ॥ ४२ ॥
तदेव कूटकोष्ठं च पञ्जरं च समश्रकम् ।
सोन्नतं सर्वतोभद्रं धर्मप्रीतिकरं भवेत् ॥ ४३ ॥
त्रितल कूटकोष्ठं च पञ्जरं समसूरकम् ।
नानाधिष्ठानसंयुक्तं नानापादैरलंकृतम् ॥ ४४ ॥
नानालंकारसंयुक्तं युग्मपञ्जरसंयुतम् ।
शिखरेऽष्टलपनासाढ्यं महानासीचतुष्टयम् ॥ ४५ ॥
वीरभद्रमिति ख्यातं सर्वदेवप्रियावहम् ।
तदेवाष्टकशाल्याढिमादिभूमौ द्विभागया ॥ ४६ ॥
भानुपञ्जरसंयुक्तं शेषं प्रागिव कल्पयेत् ।
प्रागुक्तनाम मा(चाऽऽ)ख्यातं ना(ता)न्विष्ठं परिकल्पयेत् ॥ ४७ ॥
पञ्चभूमिसमाख्यातं षट्तलं च युगं शृणु ॥ ४८ ॥

इति काश्यपशिल्पे पञ्चतलविधानं नाम द्वात्रिंशः पटलः ।

अथ त्रयस्त्रिंशः पटलः ।

---

षड्भूमिः ।

---

अथ वक्ष्ये विशेषेण षड्भूमिकविधिं परम् ।
तस्य विस्तारतुङ्गं तु प्रासादमानवद्भवेत् ॥ १ ॥
विस्तारं रुद्रधा भज्य गुणांशं गर्भगेहकम् ।
द्विभागं गृहपिण्डं स्यादलिन्द्रं शिवभागयो ॥ २ ॥
हारं शिवांशमानेन अलिन्द्रं वा स्थलं भवेत् ।
धरातले द्वित्रिभूमौ ... ... .... ... .... ... ॥ ३ ॥
वा(पा)दे तारथा(तस्था)पनं यत्र तावद्वै सुदृढं घनम् ।
बाह्येचितमलंकारं घनाभ्यन्तरवद् भवेत् ॥ ४ ॥
रव्यंशं विभजेत्तारं विन्यासं सूत्रयोत्त(स्त)रम् ।
अारं सौष्टिकविस्तारं कोष्ठं तद्द्विगुणायतम् ॥ ५ ॥
भागेन पञ्जरव्यासं शेषं हारान्तरं भवेत् ।
चतुष्कूटाष्टकोष्ठं च भानुपञ्जरसंयुतम् ॥ ६ ॥
हारान्तरं चतुर्विंशत्कल्पयेदतिभूतले ।
पञ्चारं हर्म्यमध्ये तु कण्ठेषु सौष्टिकं भवेत् ॥ ७ ॥
पार्श्वयोः कर्णकूटस्य पञ्जरं परिकल्पयेत् ।
कोष्ठपञ्जरयोर्मध्ये कल्पयेत्तु विशेषतः ॥ ८ ॥
तदूर्ध्वभूदशांशेषु व्योमांशं कर्णकूटकम् ।
मध्ये पञ्जरमेकांशं कण्ठकूटमिवाऽऽकृतिः ॥ ९ ॥
द्विभागं कोष्ठदीर्घं स्यादर्धांशं पञ्जरस्य तु ।
शेषं हारान्तरं ख्यातमेषां संख्याऽऽदिभूमिवत् ॥ १० ॥
तस्योर्ध्वभूविशालं तु नवभागविभाजिते ।
कण्ठकूटमथांशेन मध्यशाला गुणांशकम् ॥ ११ ॥
पञ्जरव्यासमेकांशमर्धांशं हारयोऽन्तरम् ।
तदूर्ध्वं वसुभागं तु शिवांशं कूटविस्तृतम् ॥ १२ ॥

मध्ये कोष्ठद्विभागेन एकांशं पञ्जरस्ततम् ।
हारान्तरमथार्धांशं कल्पयेत्कल्पवित्तमः ॥ १३ ॥
तस्योर्ध्वभूमिविस्तारं षड्भागं विभजेत्समम् ।
कूटमेकांशमानेन कोष्ठायामं तु तद्द्वयम् ॥ १४ ॥
अर्धांशं पञ्जरव्यासं शेषं हारान्तरं भवेत् ।
तदूर्ध्वभूमिविस्तारमर्धांशं मध्यभद्रकम् ॥ १५ ॥
दण्डं वाऽध्यर्धदण्डं वा द्विदण्डं भद्रनीव्रकम् ।
तत्तुङ्गं सप्तपञ्चाशदंशं कृत्वा तु देशिकः ॥ १६ ॥
अधिष्ठानोच्चपञ्चाग्निषड्भागं चरणोदयम् ।
पादहीनाग्निभागं तु प(म)ञ्चमानमुदाहृतम् ॥ १७ ॥
पादोच्चं सार्धपञ्चांशं मञ्चं सार्धविभागया ।
पादाधिकं तु पञ्चांशं पादायाममिति स्मृतम् ॥ १८ ॥
सार्धद्विभागमञ्चोच्चं पञ्चांशं चरणोदयम् ।
पादोदयं द्विभागं तु प्रस्तरोदयमीरितम् ॥ १९ ॥
पादहीनं तु पञ्चांशं तलिपस्योदयं भवेत् ।
द्विभागं प्रस्तरं ख्यातमर्धाधिक्यं युगांशकम् ॥ २० ॥
पादायाममिदं ख्यातं पादोनद्व्यंशमञ्चकम् ।
व्योमांशं वेदिकामानं पादोनद्व्यंशकं गलम् ॥ २१ ॥
सार्धवेदांशमानेन शीर्षकं परिकल्पयेत् ।
पक्षांशं तु विमानं च षड्भूमिकमेव हि ॥ २२ ॥
साष्टाविंशत्ति(त)लानि स्युर्विंशत्कूटसमन्वितम् ।
षडष्टपञ्जरोपेतं पादं प्रत्यल्पनासिकम् ॥ २३ ॥
होमादिस्तूपिपर्यन्तं चतुरश्रं प्रकल्पयेत् ।
शिखरे तु महानासिचत्वारि(सीश्चतस्रः)परिकल्पयेत् ॥ २४ ॥
अम्बुजासनमाख्यातं सर्वदेवप्रियावहम् ।
तदेव शिखरं कण्ठं वस्वश्रं परिकल्पयेत् ॥ २५ ॥
अशेषसौष्ठिकान्तं तु शीर्षकं चतुरश्रकम् ।
उन्नतावनतोपेतं भद्रं वाऽभद्रकोष्ठकम् ॥ २६ ॥
सान्तरप्रस्तरोपेतौ हीनौ वाऽपि समुन्नतौ ।
सुशोकरमिदं ख्यातं तदेवं सौष्ठिशीर्षकम् ॥ २७ ॥

वृत्ताकारं प्रकर्तव्यं नाम्ना तच्चन्द्रलीनकम् ।
तदेव शिखरे चाष्टौ कल्पि(ष्टस्वल्प)नासियुतं महत् ॥ २८ ॥
शिवभद्रमिति ख्यातं शिवप्रीतिकरं परम् ।
तदेव द्व्यश्रवृत्ताभं शीर्षकं गलसंयुतम् ॥ २९ ॥
मुखे ललाटनासाढ्यं नागेन्द्रमिति संज्ञितम् ।
षड्भूमिरेवमाख्याता सप्तभूमिमथोपरि ॥ ३० ॥

इति काश्यपशिल्पे षड्भूमिविधानं त्रयस्त्रिंशः पटलः ।

---

अथ चतुस्त्रिंशः पटलः ।

---

सप्तभूमिः ।

---

अथ वक्ष्ये विशेषेण सप्तभूमेस्तु लक्षणम् ।
प्रासादमानविधिना व्यासोदयं प्रकल्पयेत् ॥ १ ॥
रव्यंशं विभजेत्सारं वेदांशं गर्भगेहकम् ।
पक्षांशं भित्तिविष्कम्भमेकेनालिन्द्रमिष्यते ॥ २ ॥
हारान्तक(र)मथांशेन परितः कल्पयेद्बुधः ।
विन्याससूत्रयोरन्तं भान्वंशेन समं भवेत् ॥ ३ ॥
एकांशं कूटविस्तारं कोष्ठं तद्द्विगुणायतम् ।
पञ्जरव्यासमेकांशं शेषं हारान्तरं भवेत् ॥ ४ ॥
चतुष्कूटाष्टशाला च भानुपञ्जरसंख्यया ।
तस्योर्ध्वभूमिविस्तारं धर्मभागविभाजिते ॥ ५ ॥
कर्णकूटं च कोष्ठं च पूर्ववत्परिकल्पयेत् ।
पञ्जरव्यासमर्धांशं शेषं तारान्तरं भवेत् ॥ ६ ॥
तस्योर्ध्वभूमिविस्तारं धर्मभागविभाजिते ।
पञ्जरं कूटकोष्ठं च पूर्ववत्परिकल्पयेत् ॥ ७ ॥
ऊर्ध्वभूमौ नवांशे तु मध्ये शालाऽग्निभाजिते ।
व्योमांशं कर्णकूटं स्यादेकांशं पञ्जरस्ततम् ॥ ८ ॥

हारान्तरमथार्धांशं तस्योर्ध्वं वसुभाजिते ।
मध्ये शाला द्विभागेन शेषं पूर्ववदाचरेत् ॥ ९ ॥
तदूर्ध्वभूमिविस्तारं रसभागविभाजिते ।
कूटमेकांशमित्युक्तं शाला तद्द्विगुणायता ॥ १० ॥
अर्धांशं पञ्जरव्यासं शेषं हारान्तरं भवेत् ।
तदूर्ध्वे भूम्य(म्ब)ग्निभागैकं मध्ये दण्डेन निर्गतम् ॥ ११ ॥
सप्तषष्ठी(ष्टि)तिभागं तु कर्तव्यं सदनोदयम् ।
सपादाग्निरधिष्ठानं सार्धषट्काङ्घ्रितुङ्गकम् ॥ १२ ॥
तदर्धं मञ्चमानं तु षड्भागं चरणोदयम् ।
स्त्रीपादवद्द्विभागं तु मञ्चमानमुदाहृतम् ॥ १३ ॥
सार्धभूतांशमङ्घ्र्युच्चं सार्धद्व्यंशं तु प्रस्तरम् ।
सपादपञ्चभागं तु स्तम्भमानमुदाहृतम् ॥ १४ ॥
प्रस्तरं सार्धपञ्चांशं भूतांशं चरणोदयम् ।
सपादद्विभागं मञ्चं स्यात्स्त्रीपादं[तु]युगांशकम् ॥ १५ ॥
चरणोदयमित्युक्तं प्रस्तरोच्चं द्विभागया ।
पादोच्चं सार्धवेदांशं पादोनद्व्यंशमञ्चकम् ॥ १६ ॥
व्योमांशं वेदिकोत्सेधं पादोनद्व्यंशकं गलम् ।
अर्धाधिकयुगांशं तु शिखरोदयमिष्यते ॥ १७ ॥
पक्षांशं स्तूपिमानं तु गर्व्यं (र्भ्य) समतलं विदुः ।
पञ्जरं कूटकोष्ठं च समसूत्रे तु कल्पितम् ॥ १८ ॥
हीपादाग्रयुगाग्रं तु शिखरे वेदनासिका ।
शालाषड्विंशतियुक्तं भानुद्विगुणकूटकम् ॥ १९ ॥
षष्टिपञ्जरसंयुक्तं पादं प्रत्यरपमासिका ।
नानाधिष्ठानसंयुक्तमेकाकारमथापि वा ॥ २० ॥
एकैनाकृतिरङ्घ्री तु समुज्ज्वलमुदाहृतम् ।
तदेवान्तरकूटाः स्युः सान्तरप्रस्तरान्वितम् ॥ २१ ॥
श्रीच्छन्दमिति विख्यातं सर्वदेवार्हकं परम् ।
तदेव नतकूटाश्च कोष्ठोमान्ताः (श्रानन्ताः कोष्ठाः) समञ्चकाः ॥२२॥
श्रीविशालमिति ख्यातं सर्वदेवप्रियावहम् ।
तदेव श्रीपकण्ठं च अष्टाश्रं वेदिका तथा ॥ २३ ॥

श्रीकान्तमिति विख्यातं कूटकोष्ठसमं तु वा ।
समं च नतकूटं स्याच्छ्रीप्रियं तदुदाहृतम् ॥ २४ ॥
तदेव वृत्तशिखरं स्तूपिं चैव गलं तथा ।
रुद्रकान्तमिति ख्यातं रुद्रप्रीतिकरं परम् ॥ २५ ॥
तदेव कर्णकूटं तु वेदाश्राष्टाश्रमण्डलम् ।
क्रमेणाऽऽदितलात्कल्प्यं वृत्तभद्रमिदं परम् ॥ २६ ॥
तदेवोन्नतकूटं च नतशालासमन्वितम् ।
कूटमस्तकवृत्तं च सुवि(वृ)त्तमिति विद्यते ॥ २७ ॥
सोन्नतं कूटकोष्ठं च पञ्जरोन्नतमश्वकम् ।
यथेष्टं शिखराकारं कण्ठं स्तूपिघटं तथा ॥ २८ ॥
युगाश्रं शीर्षकोपेतं कण्ठकूटं प्रकल्पयेत् ।
शिवभद्रमिति ख्यातं शिवप्रीतिकरं परम् ॥ २९ ॥
तदेव कूटकोष्ठं तु दण्डं वाऽध्यर्धदण्डकम् ।
द्विदण्डं वाऽथ निष्क्रान्तं भद्रं वा भद्रपञ्जरम् ॥ ३० ॥
नानाधिष्ठानसंयुक्तं नानापादैरलंकृतम् ।
नानाचित्रैर्विचित्रं तु शिवसौख्यमुदाहृतम् ॥ ३१ ॥
तदेव गर्भगेहं तु वृत्तं वाऽथ युगाश्रकम् ।
वृत्तमेवं हि बाह्ये तु वृत्ताभं सौष्ठिकान्वितम् ॥ ३२ ॥
शेषं पूर्ववदुद्दिष्टं नानासर्वाङ्गमण्डलम् ।
पञ्जरं कूटकोष्ठं च अन्तरप्रस्तरं विना ॥ ३३ ॥
यथेष्टं शिखराकारं शिवप्रीतिकमिष्यते ।
एवं सप्ततमं(लं) ख्यातं वसुभूमिमथोपरि ॥ ३४ ॥
इति काश्यपशिल्पे सप्तभूमिविधानं नाम चतुस्त्रिंशः पटलः ।

---

अथ पञ्चत्रिंशः पटलः ।

---

वसुभूमिः ।

---

अथ वक्ष्ये विशेषेण वसुभूमिविधिं परम् ।
प्रासादमानविधिना संग्राह्य विस्तृतोदयम् ॥ १ ॥

त्रयोदशविभागं तु कृत्वा प्रासादविस्तृतम् ।
भूतांशं गर्भगेहं तु द्विभागं गृहपिण्डिका ॥ २ ॥
अलिन्द्रं चैकभागेन हार भागेन कल्पयेत् ।
अथवाऽनलभागेन गर्भगेहं विधीयते ॥ ३ ॥
भागेन ग्रहपिण्डः स्यादलिन्द्रं त्वेकभागया ।
कुड्यमेकेन कर्तव्यमलिन्द्रं तु विनांऽशकम् ॥ ४ ॥
तदर्धं पञ्जरव्यासं भद्रं वाऽभद्रमेव वा ।
भानुकोष्ठं चतुष्कूटं कलापञ्जरसंयुतम् ॥ ५ ॥
हारान्तरं च द्वात्रिंशत्कल्पयेदादिभूतले ।
वर्षस्तलमलिन्द्रं स्यात्प्रस्तरान्तघनीकृतम् ॥ ६ ॥
तदूर्ध्वभूमिविस्तृतं त्रयोदशविभाजिते ।
कूटकोष्ठादिसर्वाङ्गमादिभूमिमिवैव तु ॥ ७ ॥
तस्योर्ध्वभूविशालं तु भानुभागविभाजिते ।
कर्णकूटं तदेकांशं शालाभागद्विभागया ॥ ८ ॥
अर्धांशं पञ्जरव्यासं शेषं हारान्तरं भवेत् ।
पञ्जरं कूटकोष्ठं च संख्या त्वादितलोक्तवत् ॥ ९ ॥
हारान्तरमथार्धांशं लम्बपञ्जरसंयुतम् ।
तदूर्ध्वभूमिविभागं तु वसुभागविभाजिते ॥ १० ॥
कर्णकूटं तदेकांशं मध्ये शाला द्विभागया ।
पञ्जरव्यासमेकांशमर्धांशं हारयो(योऽ)न्तरम् ॥ ११ ॥
चतुष्कूटं चतुःशूलं वसुपञ्जरसंयुतम् ।
हारान्तरं तथा प्रोक्तं कल्पयेवं षट्तलं भवेत् ॥ १२ ॥
तदूर्ध्वभूमिभागं तु षड्भागं विभजेत्समम् ।
कूटव्यासमे(सै)कांशमित्थं मध्ये कोष्ठं द्विभागया ॥ १३
अर्धांशं पञ्जरव्यासं शेषं हारान्तरं भवेत् ।
तदर्धं पञ्जरव्यासं भद्राभद्रं तु एव वा ॥ १४ ॥
भानुकोष्ठं चतुष्कूटं कपालं ज(लान्त)रसंयुतम् ।
हारान्तरं च द्वात्रिंशत्कल्पयेदादिभूतले ॥ १५ ॥
वर्षस्तलमलिन्द्रं स्यात्प्रस्तरं त्वघनीकृतम् ।
तदूर्ध्वभूमिविस्तारं त्रयोदशविभाजिते ॥ १६ ॥

कूटकोष्ठादिसर्वाङ्गमादिभूमिमिवैव तु ।
तस्योर्ध्वभूविशालं तु भानुभागविभाजिते ॥ १७ ॥
कूटकोष्ठादिसर्वाङ्गं मानसंख्यादि पूर्ववत् ।
तदूर्ध्वभूदशांशे तु कूटकोष्ठं च पूर्ववत् ॥ १८ ॥
हारान्तरमथार्धांशं लम्बपञ्जरसंयुतम् ।
तदूर्ध्वभूविशालं तु वसुभागविभाजिते ॥ १९ ॥
कर्णकूटं तदेकांशं मध्ये शाला द्विभागया ।
पञ्जरव्यासमेकांशमर्धांशं हारयोत्तरम् ॥ २० ॥
चतुष्कूटं चतुःशालं वसुपञ्जरसंयुतम् ।
हारान्तरं तथा प्रोक्तं कल्पयैवं षट्तलं भवेत् ॥ २१ ॥
तदूर्ध्वभूविशालं तु षड्भागं विभजेत्समम् ।
कूटमेकांशमित्युक्तं मध्ये कोष्ठं द्विभागया ॥ २२ ॥
अर्धांशं पञ्जरव्यासं शेषं हारान्तरं भवेत् ।
तदूर्ध्वभूविशालाढ्ये मध्ये दण्डेन नीव्रकम् ॥ २३ ॥
कूटात्कोष्ठं तु नीव्रं वा मध्यशाला त्वनीव्रका ।
कूटं कोष्ठमशेषं तु समसूत्रग(त्रेण) एव वा ॥ २४ ॥
ससप्तसप्ततिभागं कृत्वा हेमसमुच्चयम् ।
सार्धत्रिंशमधिष्ठानं सप्तांशं चरणोदयम् ॥ २५ ॥
प्रस्तरं तु सपादाग्नि सार्धषट्काङ्घ्रितुङ्गकम् ।
सार्धद्विभागमञ्चोच्चं कल्पयेत्तु विशेषतः ॥ २६ ॥
सपादपञ्चभागं तु चरणोदयमीरितम् ।
प्रस्तरं साध्यपक्षांशं भूतांशं चरणोदयम् ॥ २७ ॥
सपादभागमञ्चं स्यात्पादं पादोनपञ्चकम् ।
मञ्चमानं द्विभागं तु सार्धं पादयुगांशकम् ॥ २८ ॥
सत्रिपादांशमञ्चोच्चं व्योमांशं वेदिकोदयम् ।
कण्ठपादेन पक्षांशं सार्धवेदांशशीर्षकम् ॥ २९ ॥
कण्ठमानं समं स्तूपितुङ्गमित्यत्र कथ्यते ।
स्तूप्यन्तं तदुपानादि वेदाश्रं परिकल्पयेत् ॥ ३० ॥
श्रौष्ठ(अष्टा)श्रं च युगांशं स्यात्स्तम्भं प्रत्यल्पनासिकम् ।
शिखरे तु चतुर्नासियुक्तास्ते स्युर्महान्तराः ॥ ३१ ॥

एकाकारतलं स्तम्भं शिवच्छन्दमुदाहृतम् ।
तदेव नतशाखाः स्युमश्चमाः(काः) सौष्ठिकोन्नतम् ॥ ३२ ॥
वागीशमिति विख्यातं सर्वदेवप्रियावहम् ।
चतुरश्राष्टवृत्ताभं सौष्ठिको वा पुनः पुनः ॥ ३३ ॥
विमानशिखरं कण्ठमष्टाश्रं परिकल्पयेत् ।
तदष्टभागं विख्यातं धर्मप्रीतिकरं परम् ॥ ३४ ॥
तदेव कूटकोष्ठं च सचंवात्रिमव(मञ्चं वा त्रिम)ञ्चकम् ।
समोन्नतं तथा कूटं नानाहस्तानताङ्घ्रिकम् ॥ ३५ ॥
नानाचित्रविचित्रं तु तत्पर्वतमिति स्मृतम् ।
तदेव शिखरं कण्ठं वृत्ताभं परिकल्पयेत् ॥ ३६ ॥
नाम्ना कैलासमित्युक्तं मम प्रीतिकरं परम् ।
एवमष्टतलं ख्यातं नवभूमिमथोपरि ॥ ३७ ॥

इति काश्यपशिल्पे वसुभूमिविधानं पञ्चत्रिंशः पटलः ।

---

अथ षट्त्रिंशः पटलः ।

---

## नवभूमिः ।

---

अथ वक्ष्ये विशेषेण नवभूमिविधिं परम् ।
प्रासादमानवत्कार्यं गेहस्य सदनं तरम् ॥ १ ॥
पक्षांशं विभजेत्तारं गुणांशं गर्भगेहकम् ।
द्विभागा गृहपिण्डी स्यादलिन्द्रं त्वेकभागया ॥ २ ॥
व्योमांशं कुड्यविस्तारमलिन्द्रं तत्समं भवेत् ।
हारव्यासं शिवांशेन कल्पयेत्कल्पवित्तमः ॥ ३ ॥
अथवा षोडशांशं तु प्रासादं विभजेत्समम् ।
युगांशं गर्भगेहं तु द्विभागा गृहपिण्डिका ॥ ४ ॥
अलिन्द्रं तु शिवांशेन व्योमांशं कुड्यविस्तृतम् ।
अलिन्द्रं व्योमभागेन हारान्वैवं तु तत्समम् ॥ ५ ॥
विन्याससूत्रयोरन्तः कालांशं विभजेत्समम् ।
एकांशं सौष्ठिकं व्यासं कोष्ठं तद्द्विगुणायतम् ॥ ६ ॥

पञ्जरव्यासमेकांशमेकांशं कूटमानकम् ।
हारान्तरं च द्वात्रिंशत्कल्पयेदादिभूतले ॥ ७ ॥
एवमेव प्रकर्तव्यं द्वितीयं च महीतलम् ।
तृतीमहीतलस्या(यभूतलाया)मं मनुभागविभाजिते ॥ ८ ॥
अर्धांशं पञ्जरव्यासं शेषं पूर्ववदाचरेत् ।
तद्वच्चतुस्तलं चैव कल्पयेद्देशिकोत्तमः ॥ ९ ॥
पञ्चभूमिविभागं तु भानुभागविभाजिते ।
एकांशं कूटविस्तारं शाला तद्द्विगुणायता ॥ १० ॥
अर्धांशं पञ्जरव्यासं तस्यार्धं हारयोत्तरम् ।
भानुशाला च कूटाभं पञ्जरं षोडशैव तु ॥ ११ ॥
तदूर्ध्वभूविशालं तु वसुभागविभाजिते ।
एकांशं सौष्ठिकव्यासं मध्ये भागद्विशालया ॥ १२ ॥
पञ्जरव्यासमेकांशमर्धांशं हारयोत्तरम् ।
तदूर्ध्वभूविशालं तु रसभागविभाजिते ॥ १३ ॥
एकांशं कूटविस्तारं कोष्ठं तद्द्विगुणायतम् ।
पञ्जरव्यासमर्धांशं शेषं हारान्तरं भवेत् ॥ १४ ॥
तदूर्ध्वं भूविशालं तु गुणभागविभाजिते ।
मध्यांशं दण्डमानेन निर्गमं परिकल्पयेत् ॥ १५ ॥
साष्टविंशतिभागं तु कृत्वा देहा(गेहो)दयं बुधः ।
पादोनचतुरंशं तु धरातलमिति स्मृतम् ॥ १६ ॥
पा दोच्चं सार्धसप्तांशं सार्धाग्न्यंशं तु प्रस्तरम् ।
सप्तांशं चरणोच्चं तु सपादाग्न्यंशमंश(मञ्च)कम् ॥ १७ ॥
सार्धषट्काङ्घ्रितुङ्गं तु गुणांशं मञ्चमानकम् ।
षड्भागं पादमानं तु पादोनाग्न्यंशमञ्चकम् ॥ १८ ॥
पादोच्चं सार्धभूतांशं सार्धपक्षांशमञ्चकम् ।
सपादपञ्चभागं तु पादोत्सेधं समुच्यते ॥ १९ ॥
प्रस्तरं सार्धपक्षांशं भूतांशं चरणोदयम् ।
पादाधिक्यं द्विभागं तु प्रस्तरस्योदयं भवेत् ॥ २० ॥
पादोनपञ्चकं पादं प्रस्तरोच्चं द्विभागया ।
सार्धवेदांशकं पादं पादोनद्व्यंशमञ्चकम् ॥ २१ ॥

शिवांशं वेदिकोत्सेधं कण्ठं चाप्यर्धभागया ।
शीर्षं सपादवेदांशं पादोनद्व्यंशदं(सं)शिखम् ॥ २२ ॥
पादं प्रत्यल्पनासाढ्यं शिखरं वेदनासिकम् ।
समं च नतकूटाढ्यं कूटाढ्यं चतुरश्रकम् ॥ २३ ॥
होमादिस्तूपिपर्यन्तं युगाश्रं परिकल्पयेत् ।
अशेषं मध्यशालं तु पार्श्वकोष्ठं तु निर्गतिः ॥ २४ ॥
दण्डं वाऽध्यर्धदण्डं वा नाम्ना ललितभद्रकम् ।
तदेवोन्नतकोष्ठाः स्युः समं च नतभद्रकम् ॥ २५ ॥
ब्रह्मकान्तमिदं नाम्ना सर्वदेवप्रियावहम् ।
समश्रं वाऽपि(प्य)मश्रं वा कूटकोष्ठसमन्वितौ(तम्) ॥ २६ ॥
प्रादेशमिति विख्यातं सर्वदेवप्रियावहम् ।
तदेव शिखरं कण्ठं वस्वभ्रं (श्रं) चाष्टनासिकम् ॥ २७ ॥
युगाश्रं वसुकोणं वा वृत्तं वा सौष्ठिकं पुनः ।
सौम्यशेषं युगाश्रं स्याच्छ्रीवर्धनमिदं परम् ॥ २८ ॥
समश्रौ कूटकोष्ठौ द्वौ विमुचौसाध(मश्रौ वाऽथ)सदृशौ ।
वृत्ताश्रव(य)शिरोपेतं चतुर्दिग्भद्रनासिकम् ॥ २९ ॥
विदिक्षु युग्मनासाढ्यं युग्मसा(ग्मं वाऽ)युग्ममेव वा ।
युग्मं पञ्जरसंयुक्तं सुपद्ममिति विद्यते ॥ ३० ॥
तदेव वृत्तसौष्ठ्यग्रं कृतवर्धनमुच्यते ।
तदेव गर्भगेहं तु वृत्तं वृत्तगृहं भवेत् ॥ ३१ ॥
एवं नवतन्तु(लं) ख्यातं दशभूमिमथोपरि ॥ ३२ ॥

इति काश्यपशिल्पे नवभूमिविधानं षट्त्रिंशः पटलः ।

---

अथ सप्तत्रिंशः पटलः ।

---

## दशभूमिलक्षणम् ।

---

अथ वक्ष्ये विशेषेण दशभूमेस्तु लक्षणम् ।
पार्श्वप्रासादमानोक्तप्रमाणैर्वोदयं ततम् ॥ १ ॥

कल्पयित्वा तु तत्तारं मनुभागविभाजिते ।
वेदांशं गर्भगेहं तु गृहपिण्डी त्रिभागया ॥ २ ॥
अलिन्द्रं त्वेकभागेन हारान्तरं शिवांशकम् ।
विन्याससूत्रयोरन्तर्मनुभागविभाजिते ॥ ३ ॥
तेष्ठे(ष्वे)कं कूटविस्तारं बा(शा)लादीर्घं तु तद्द्वयम् ।
एकांशं पञ्जरं व्यासं पादं हारान्तरं भवेत् ॥ ४ ॥
चतुष्कूटं चतुःशालं पञ्जरं षोडशान्वितम् ।
हारान्तरं च द्वात्रिंशत्कल्पयेदादिभूतले ॥ ५ ॥
तदूर्ध्वभूमिविस्तारं त्रयोदशविभाजिते ।
एकांशं कण्ठकूटं तु शाला तद्द्विगुणायता ॥ ६ ॥
एकांशं पञ्जरव्यासं शेषं हारान्तरं भवेत् ।
ऊर्ध्वभूविस्तृतं भानुभागं कृत्वांऽशसौष्ठिकम् ॥ ७ ॥
द्विगुणं कोष्ठदीर्घं तु अर्धांशं पञ्जरस्ततम् ।
पादं हारान्तरं ख्यातं तेषां संख्यादिपूर्ववत् ॥ ८ ॥
तस्योर्ध्वतलविस्तारं रुद्रभागविभाजिते ।
पादपञ्जरविस्तारं शेषं पूर्ववदेव हि ॥ ९ ॥
तदूर्ध्वभूदशांशे तु व्योमांशं कूटविस्तृतम् ।
कोष्ठं तद्द्विगुणायामं शेषं हारान्तरं भवेत् ॥ १० ॥
हारान्तरं त्रिभागैकं पञ्जरव्यासमुच्यते ।
तस्योर्ध्वभूनवांशे तु शिवांशं सौष्ठिकं भवेत् ११ ॥
हारान्तरं द्विभागैकं पञ्जरव्यासमुच्यते ।
तस्योर्ध्वभूनवांशे तु शिवांशं सौष्ठिकं भवेत् ॥ १२ ॥
अत्यर्धांशं तु कोष्ठं स्याच्छेषं हारान्तरं समम् ।
हारान्तरं द्विभागैकं पञ्जरव्यासमुच्यते ॥ १३ ॥
मागवत्संख्यासरुद्रांशं सभूमिरेवमेव हि ।
अष्टांशं विभजेत्सप्ततलविस्तारमेव हि ॥ १४ ॥
कूटमेकांशमानेन मध्ये शाला द्विभागया ।
पञ्जरव्यासमेकांशं हारान्तरं तदर्धकम् ॥ १५ ॥
चतुष्कूटं चतुःशालं पञ्जराष्टकसंयुतम् ।
हारान्तरं कलासंख्यां कल्प्यैवं सप्तकं तलम् ॥ १६ ॥

सप्तांशं विभजेदष्टमत(ध)श्चैव तु विस्तरम् ।
प्राग्वत्कूटं च कोष्ठं च शेषं हारान्तरं तथा ॥ १७ ॥
.... .... ...मग्निभागैकविस्तृतम् ।
नवभूमिविशालं तु षड्भागं विभजेत्समम् ॥ १८ ॥
प्राग्वत्कूटं च कोष्ठं च पञ्जा(ञ्ज)रं च प्रकल्पयेत् ।
तदूर्ध्वे भूमिविस्तारमनलांशविभाजिते ॥ १९ ॥
मध्ये भद्रं तदेकांशं दण्डमास्यति(नेन) निर्गतिः ।
प्रासादस्य तु चोत्सेधं शतभागविभाजिते ॥ २० ॥
युगांशं तदधिष्ठानमष्टांशं चरणायतम् ।
पादोनवेदभागं तु मञ्चमानमुदाहृतम् ॥ २१ ॥
पादोच्चं सार्धसप्तांशं प्रस्तरं सार्धवह्निकम् ।
धात्वंशं चरणोच्चं तु सपादाग्न्यंशमञ्चकम् ॥ २२ ॥
सार्धषट्काङ्घ्रितुङ्गं तु प्रस्तरं चाग्निभागया ।
रसांशं पाददीर्घं तु पादोनाग्न्यंशमञ्चकम् ॥ २३ ॥
पादोच्चं सार्धपञ्चांशं सार्धपक्षांशमञ्चकम् ।
पादाधिकं तु पञ्चांशं पादस्योत्सेधमुच्यते ॥ २४ ॥
सार्धपक्षांशमञ्चोच्चं पञ्चांशं पाददैर्घ्यकम् ।
पादाधिकं तु पक्षांशं मञ्चमानमुदाहृतम् ॥ २५ ॥
सत्रिपादयुगांशं तु पाददैर्घ्यमुदाहृतम् ।
प्रस्तरोच्चं द्विभागं तु सार्धवेदांशम(म)ङ्घ्रिकम् ॥ २६ ॥
पादोनद्व्यंशमञ्चः स्यात्पञ्च भागं वितर्दिका ।
तदेवोन्नतकूटादि नरकान्तमिति स्मृतम् ॥ २७ ॥
कण्ठमध्यर्धभागेन शीर्षकं सार्धवेध(द)कम् ।
पादहीनाद्विभागं तु स्तूप्युत्सेधमुदाहृतम् ॥ २८ ॥
अग्राकारं युगाश्रं तु शिखरे युगनासिका ।
पादं प्रत्यल्पनासाढ्यं नानापादधरातलम् ॥ २९ ॥
अत्यन्तकान्तमित्युक्तं सर्वदेवप्रियावहम् ।
तदेवोन्नतकोष्ठं च नतं चोन्नतसौष्ठिकम् ॥ ३० ॥
पक्षशाला तु मध्यस्थं शालादण्डेन नीव्रकम् ।
अष्टाश्रं शिखरं कण्ठं शिखरं चाष्टनासिकम् ॥ ३१ ॥

नानालंकारसंयुक्तं चतुष्कूटमिदं परम् ।
तदेव कूटकोष्ठं च नान्तरप्रस्तरं परम् ॥ ३२ ॥
कूटकोष्ठादिसर्वाङ्गं समसूत्रमथापि वा ।
मन्त्रपूतमिति ख्यातं विमानं सर्वकामिकम् ॥ ३३ ॥
तदेव शिखरं कण्ठवृत्ताभं परिकल्पयेत् ।
नात्र(भ्रा) कान्तमिति ख्यातं सर्वदेवार्हकं गृहम् ॥ ३४ ॥
तदेवं कर्णकण्ठानां शीर्षकं च गलं तथा ।
वृत्ताकारं प्रकर्तव्यं यत्तदीश्वरकान्तकम् ॥ ३५ ॥
दशभूभागमाख्यातं ततस्त्वेकादशातलम् ॥ ३६ ॥

इति काश्यपशिल्पे दशभूमिविधानं सप्तत्रिंशः पटलः ।

---

अथाष्टात्रिंशः पटलः ।

---

## रुद्रभूमिः ।

---

अथ वक्ष्ये विशेषेण रुद्रभूमिविधानकम् ।
प्रासादमानविधिना संग्रहेत्तु ततोदयम् ॥ १ ॥
तिथ्यंशं विभजेत्तारं गुणांशं गर्भगेहकम् ।
पक्षांशा गृहपिण्डी स्यादलिन्द्रं त्वेकभागया ॥ २ ॥
एकांशं कुड्यविस्तारमलिन्द्रं तु शिवांशकम् ।
हारान्तरमथांशेन कल्पयेत्तु यथाक्रमम् ॥ ३ ॥
अलिन्द्रं वा घना भित्तिरथापि वा । (?)
प्रस्तरान्तं घनं वाऽपि तदूर्ध्वेऽलिन्द्रमेव वा ॥ ४ ॥
विन्याससूत्रयोरन्तर्व्यासः पक्षांशभाजिते ।
शिवांशं कर्णकूटं स्यात्पक्षशाला द्विभागया ॥ ५ ॥
मध्यशालाऽग्निभागा स्यादर्धांशं म(प)ञ्जरं भवेत् ।
हारान्तरं च तत्तुल्यं कल्प्यैवं ह्यादिभूतले ॥ ६ ॥
तदूर्ध्वभूविशालं तु मनुभागविभाजिते ।
शिवांशं कूटविस्तारं कोष्ठं तद्द्विगुणायतम् ॥ ७ ॥

शेषं हारान्तरं ख्यातं त्रिभागैकमपञ्जरम् ।
पञ्जरं कूटकोष्ठं च संख्या वै प्रागिवैव तु ॥ ८ ॥
तदूर्ध्वभूमिविस्तारं रुद्रांशं तु द्विभाजिते ।
पञ्जरं कूटकोष्ठं च प्रागिवैव प्रकल्पयेत् ॥ ९ ॥
तस्योर्ध्वभूमिविस्तारं दशभागविभाजिते ।
कूटं चैव तु कोष्ठं च संख्यामानं च पूर्वकम् ॥ १० ॥
तदूर्ध्वभूनवांशे तु कूटव्यासं शिवांशकम् ।
अत्यर्धांशं तु कोष्ठायां(नां) शेषं हारान्तरं भवेत् ॥ ११ ॥
हारान्तरं त्रिभागैकं पञ्जरव्यासमुच्यते ।
प्राग्वत्कूटाद्यसंख्याः स्युः कल्पयेत्कल्पवित्तमः ॥ १२ ॥
अष्टांशं विभजेदिष्टभूपेश्वेत्रं तु विस्तरम् ।
कूटविस्तारमेकांशं मध्ये शाला द्विभागया ॥ १३ ॥
पञ्जरं व्यासमेकांशं हारान्तं च तदर्धकम् ।
चतुष्कूटं चतुःशालं पञ्जराष्टकसंयुतम् ॥ १४ ॥
हारान्तरं कला संख्या प्रोच्यतेऽष्टकलान्वितौ(ते) ।
नवभूमिविशालं तु सप्तधा विभजेत्समम् ॥ १५ ॥
कूटव्यासमथांशेन कोष्ठदीर्घं द्विभागया ।
शेषं हारान्तरं ख्यातं तत्त्रिभागेन पञ्जरम् ॥ १६ ॥
दशभूमिविशालं तु रसभागविभाजिते ।
प्राग्वत्कूटं च कोष्ठं च पञ्जरं च प्रकल्पयेत् ॥ १७ ॥
प्रथमा(एका)दिपञ्चभूम्यन्तं भद्रपञ्जरसंयुतम्
पञ्जरं भूपरिष्ठात्तु भद्रं वा भद्रपञ्जरम् ॥ १८ ॥
ऊर्ध्वभूमिविशालं तु गुणभागाविभाजिते ।
मध्यभद्रं तदेकांशं दण्डमानन निर्गतिः ॥ १९ ॥
प्रासादस्य तु चोत्सेधं शतांशं च त्रयोदश ।
कृत्वा सार्धं युगांशं तु धरातलमुदाहृतम् ॥ २० ॥
पादोच्चं सार्धवस्वंशं मञ्चमानं युगांशकम् ।
वस्वंशं चरणायामं पादोनं कंयु(च युगांशकम्) ॥ २१ ॥
चरणं सार्धसप्तांशं प्रस्तरं सार्धवाह्निकम् ।
सप्तांशं पाददीर्घं तु सपादाग्निकमञ्चकम् ॥ २२ ॥

अर्धाधिकं षडंशं तु पादोच्चाधिस्तु मञ्चकम् ।
षडंशं पादतुङ्गं तु पादोनत्रिंशमञ्चकम् ॥ २३ ॥
सत्रिपादं तु भूतांशं पाददीर्घमुदाहृतम् ।
अर्धाधिकद्विभागं तु प्रस्तरस्योदयं भवेत् ॥ २४ ॥
सपादपञ्चभागं तु पादोदयमुदाहृतम् ।
सार्धपक्षांशमञ्चोच्चं भूतांशं चरणोदयम् ॥ २५ ॥
सपादपक्षभागं तु मञ्चमानमुदीरितम् ।
पादोनपञ्चभागं तु चरणोदयमीरितम् ॥ २६ ॥
मञ्चमानं द्विभागं स्यात्सार्धवेदांशमङ्घ्रिकम् ।
सत्रिपादाशिवांशं तु प्रस्तरस्य समुच्चकम् ॥ २७ ॥
दस्रांशं वेदिकामानं कण्ठोच्चं सार्धभागया ।
अर्धाधिकं तु वेदांशं शिखरोदयमिष्यते ॥ २८ ॥
पादोनं तु द्विभागं स्यात्स्तूपेरुदयमिष्यते ।
होमादिस्तूपिपर्यन्तं युगाश्रं परिकल्पयेत् ॥ २९ ॥
शिखरे तु चतुर्दिक्षु महानासीसमन्वितम् ।
पादं प्रत्यल्पनासाढ्यं ब्रह्मकान्तं तदुच्यते ॥ ३० ॥
सौष्ठिकं सान्तरं मञ्चं विजयं तदुदाहृतम् ।
तदेव नतकूटं च कोष्ठानञ्चा(चानन्ताः कोष्ठाः)समञ्चकाः ॥३१॥
सर्वार्हकमिदं ख्यातं सर्वदेवार्हकं परम् ।
तदेव शिखरं कण्ठं वृत्तमष्टांशवेदिका ॥ ३२ ॥
इन्द्रकान्तमिति ख्यातं सर्वदेवार्हकं परम् ।
तदेव मध्यभद्राढ्यं कूटकोष्ठौ समौ ततौ ॥ ३३ ॥
समञ्चं वा विमञ्चं वा कूटशाला च पञ्जरम् ।
गणिकाशालकं प्रोक्तं ब्रह्मविष्णुशिवार्हकम् ॥ ३४ ॥
तदेव शिखरं कण्ठं वृत्तमष्टाक्षिवेदिकम् ।
इन्द्रकान्तमिति ख्यातं विमानं सर्वदेविकम् ॥ ३५ ॥
तदेव कर्णकूटं तु भद्रयुक्कर्णकूटकम् ।
तदेव सौष्ठिकानां तु शीर्षकं मण्डलाकृति ॥ ३६ ॥

नाम्ना कर्णविशालं तु सर्वदेवप्रियं गृहम् ।
एवमेकादशभूमिलक्षणं परिकीर्तितम् ॥ ३९ ॥

इति काश्यपशिल्पे रुद्रभूमिविधानमष्टात्रिंशः पटलः ।

---

अथैकोनचत्वारिंशः पटलः ।

---

भानुभूमिः ।

---

अथ वक्ष्ये विशेषेण भानुभूमिविधिं परम् ।
हर्म्यविस्तारतुङ्गं च प्रोक्तं प्रासादमानकम् ॥ १ ॥
ससप्तधर्मभागं तु कृत्वा प्रासादविस्तरम् ।
तदेव सौष्ठिकानां तु शीर्षकं कुण्डलाकृति ॥ २ ॥
भूताङ्गं गृह(गर्भ)गेहं तु पक्षांशं गृहपिण्डिका ।
अलिन्द्रं त्वेकभागेन कुड्यमत्रां(र्धां)शमानतः ॥ ३ ॥
अलिन्द्रं तु शिवांशं स्याद्द्वारभागेन कल्पयेत् ।
अथवा गर्भगेहं तु गुणांशेनैव कारयेत् ॥ ४ ॥
गर्भगेहस्य तुल्यं स्याद्गृहपिण्ड्यास्तु विस्मृ(स्तृ)तम् ।
शेषं प्रागिव कर्तव्यमलिन्द्रं कुड्यहारया ॥ ५ ॥
विन्याससूत्रयोरन्तः सप्तदशविभाजिते ।
गुणांशं मध्यशाला स्यात्कर्णकूटं शिवांशकम् ॥ ६ ॥
तयोर्मध्ये तु पक्षांशं शालादिव्यमुदाहृतम् ।
कूटकोष्ठान्तरे चैव कोष्ठयोरन्तरेऽपि च ॥ ७ ॥
शिवांशं पञ्जरव्यासं कर्णकूटमिवाकृतिम् ।
हारान्तरं तदूर्ध्वांशं क्षुद्रपञ्जरसंयुतम् ॥ ८ ॥
एवमादितलं कुर्यादूर्ध्वं रुद्रतलोक्तवत् ।
सप्तविंशं च तं भागं कृत्वा हर्म्योदयं द्विज ॥ ९ ॥
धा(ध)रातलोच्चं भूतांशं नवांशं चरणोदयम् ।
सार्धदेवां(वेदां)शं मञ्चोच्चं शेषं रुद्रतलोक्तवत् ॥ १० ॥

एवं भानुतलं प्रोक्तं त्रयोदशतलं शृणु ॥ ११ ॥

इति काश्यपशिल्पे भानुभूमिविधानमेकोनचत्वारिंशः पटलः।

---

अथ चत्वारिंशः पटलः।

---

त्रयोदशभूमिः।

---

अथ वक्ष्ये विशेषेण त्रयोदशतलं परम्।
.स्य विस्तारमानं स्थ(तु) प्रासादमानवद्भवेत् ॥ १ ॥
एकोनविंशदं[शं] तु कर्तव्यं सदनं स्त(त)त्तम।
गुणांशं गर्भगेहं तु पक्षांशं गृहपिण्डकम् ॥ २ ॥
अलिन्द्रं च शिवांशं स्याद्भित्तिः स्यादुन्नतं समम्।
अलिन्द्रं त्वेकभागेन भित्तिव्यासं शिवांशकम् ॥ ३ ॥
व्योमभागमलिन्द्रं स्याद्धराव्यासं च तत्समम्।
विन्याससूत्रयोरन्तरेकोनविंशदंशके ॥ ४ ॥
शिवांशं कर्णकूटं स्यान्मध्ये शालाऽग्निभागया।
पक्षशाला च तत्तुल्यमेकांशं पञ्जरस्य तु ॥ ५ ॥
हारान्तरमथार्धांशं क्षुद्रपञ्जरसंयुतम्।
पञ्जरं कर्णकूटाभं तस्या(दा)भक्षुद्रपञ्जरम् ॥ ६ ॥
एवमादितलं प्रोक्तमूर्ध्वं भानुतलोक्तवत्।
चत्वारिंशद्द्वयाधिक्ये शतांशे सदनोत्सुके ॥ ७ ॥
पञ्चांशं तदधिष्ठानं दशांशं चरणोदयम्।
भूतांशं मञ्चमानं स्याच्छेषं द्वादशभूमिवत् ॥ ८ ॥
त्रयोदशतलं ह्येवं कलाभूमिमथोपरि ॥ ९ ॥

इति काश्यपशिल्पे त्रयोदशभूमिविधानं नाम चत्वारिंशः पटलः।

---

अथैकचत्वारिंशः पटलः ।

---

षोडशभूमिः ।

---

अथ षोडशभूमिस्तु वक्ष्यते देशिकोत्तम ।
एवं क्रमेण संकल्प्य पश्चालिन्द्रसमान्वितम् ॥ १ ॥
पञ्चहारसमायुक्तं गृहपिण्डे समानकम् ।
गर्भगेहं समांशं च वेदांशं गृहपिण्डिका ॥ २ ॥
शेषं पूर्ववदुद्दिष्टमलिन्द्रादि द्विजोत्तम ।
एकद्वित्रिचतुष्पञ्च भूमौ वाऽथ धरातले ॥ ३ ॥
देवतास्थापन कुर्यात्पोडशस्थलहर्म्यके ।
देवतास्थापनं भूमिर्यावत्तावद्धनं कुरु ॥ ४ ॥
बाह्योऽन्द्रे चिद(ह्यालिन्द्रे अ)लंकारं घनमत्यन्तरं कुरु ।
अलिन्द्रजलतत्पादाच्छादितं वा तुलादिभिः ॥ ५ ॥
प्रस्तरान्तर्घनं वाऽथ भान्तं वातात्तु तद्धनम् ।
व्यासे सवेदत्रिंशांशे कर्णकूटं शिवांशकम् ॥ ६ ॥
हर्म्यमध्ये तु वेदांशं शालायामसुदाहृतम् ।
तयोर्मध्ये तु पक्षांशे ध्वातुं सं(शेऽध्वतुङ्गं) परिकल्पयेत् ॥ ७ ॥
तयोर्मध्ये शिवांशेन पञ्जरं कर्णकूटवत् ।
हारान्तरं तयोर्मध्येद(ध्ये अ)र्धांशेनैव कल्पयेत् ॥ ८ ॥
एवं हि कल्पयेदादिभूमौ शालाष्टविंशतिः ।
कर्णकूटं तु वेदासु (दांशं) द्वात्रिंशं पञ्जरं भवेत् ॥ ९ ॥
सवेदषष्टिसंख्याः स्युर्हा(ख्यं स्याद्धा)रान्तरं द्विजोत्तम ।
एवमादितलं ख्यातं नद्धि द्वात्रिंशदंशके ॥ १० ॥
द्विभागं मध्यशाला स्याच्छेषं पूर्ववदाचरेत् ।
द्वितीयं ह्येवमाख्यातं तृतीयमधुनोच्यते ॥ ११ ॥
त्रिंशदंशद्विभागं तु कृत्वा मामन्त्रि(नं त्रि) भूमिकम् ।
कर्णकूटस्य पार्श्वस्थं पञ्जरं त्र्यर्धभागया ॥ १२ ॥
हारान्तरं तदर्धं स्याच्छेषं त्रिनयभूमिवत् ।
चतुर्भूमिविशालं तु साष्टाविंशतिभागया ॥ १३ ॥

कर्णकूटसमीपस्थं शालायास्तु द्विपार्श्वयोः ।
एकांशं पञ्जरव्यासं शेषं प्रागिव कल्पितम् ॥ १४ ॥
पञ्चमे तलविस्तारे षड्विंशत्यंशभाजिते ।
मध्ये शाला तु वेदांशं व्योमांशं कर्णकूटकम् ॥ १५ ॥
तयोर्मध्यस्त(स्थ)शाला च तयोर्मध्ये च कोष्ठकम् ।
प्रत्येकं च द्विभागेन कल्पयेत्कल्पवित्तमः ॥ १६ ॥
तयोर्मध्येऽर्धभागेन पञ्जरं कर्णकूटकम् ।
हारान्तरं तदर्धेन तेषां संख्याऽऽदिभूमिवत् ॥ १७ ॥
षष्ठं च भूमिविस्तारं चतुर्विंशतिभाजिते ।
मध्ये कोष्ठं द्विभागेन शेषं पूर्ववदेव हि ॥ १८ ॥
सप्तभूमि(मे)स्तु विस्तारं द्वाविंशत्यंशकं भवेत् ।
शिवांशं कर्णकूटं तु मध्यशाला द्विभागया ॥ १९ ॥
तयोर्मध्ये शिवांशेन क्षुद्रकोष्ठ प्रकल्पयेत् ।
तयोर्मध्ये द्विभागेन कोष्ठायाममुदाहृतम् ॥ २० ॥
अर्धांशं पञ्जरव्यासं तदर्धं हारयोत्तरम् ।
पञ्जरं कूटकोष्ठं च संख्या वै प्रागिवैव तु ॥ २१ ॥
अष्टमं भूमिविस्तारं विंशत्यंशद्वि(त्रि)भाजिते ।
व्योमांशं कर्णकूटं स्यान्मध्ये कोष्ठं द्विभागया ॥ २२ ॥
तयोर्मध्ये द्विभागेन कोष्ठायाममुदाहृतम् ।
अर्धांशं पञ्जरव्यासं तदर्धं हारयोत्तरम् ॥ २३ ॥
पञ्जरं कूटकोष्ठं च संख्या स्यात्प्रागिवैव तु ।
अष्टमं भूमिविस्तारं विंशत्यंशद्वि(त्रि)भाजिते ॥ २४ ॥
व्योमांशं कर्णकूटं स्यान्मध्ये कोष्ठं द्विभागया ।
तयोर्मध्ये द्विभागेन कोष्ठायाममुदाहृतम् ॥ २५ ॥
तयोर्मध्ये शिवांशेन क्षुद्रकोष्ठं प्रकल्पयेत् ।
शेषं प्रागिव कर्तव्यं तेषां संख्यादि पूर्ववत् ॥ २६ ॥
नवभूमिविशालं तु त्रिःपडंशविभाजिते ।
शिवांशं कर्णकूटं स्यान्मध्ये शाला द्विभाजिता ॥ २७ ॥
तयोर्मध्येऽर्धभागेन पञ्जरं परिकल्पयेत् ।
तत्र्यार्धेनैव तत्पार्श्वे तयेहा(योर्हा)रान्तरं भवेत् ॥ २८ ॥

तत्पार्श्वयोर्द्विभागं स्यात्कोष्ठं कुर्याद्विशेषतः ।
कूटकोष्ठान्तरे चैव कोष्ठयोरन्तरेऽपि च ॥ २९ ॥
पञ्जरं कल्पयेद्धीमानर्धांशेनैव सुव्रत ।
हारान्तरं तदर्धांशं कल्पयेत्कल्पवित्तमः ॥ ३० ॥
त्रिंशत्कोष्ठं चतुष्कूटं पञ्जरं भानुभिर्द्वयम् ।
अ(क)ल्प्यैवं नवभूमौ तु दशभूमिम(र)थोच्यते ॥ ३१ ॥
दशभूमेस्तु विस्तारं षोडशांशविभाजिते ।
कर्णकूटं शिवांशं स्यत्तत्समं पञ्जरस्तरम् ॥ ३२ ॥
शालायामं द्विभागं स्यादर्धांशं हारयोस्तरम् ।
भानुशालाचतुष्कूटं कलापञ्जरसंयुतम् ॥ ३३ ॥
हारान्तरं तु द्वात्रिंशत्कल्पयेद्दशमे तले ।
एकादशतलव्यासं मनुभागविभाजिते ॥ ३४ ॥
शिवांशं कर्णकूटं तु मध्ये शाला द्विभागया ।
तयोर्मध्यस्थशालानां गुणांशं परिकल्पयेत् ॥ ३५ ॥
अर्धांशं पञ्जरव्यामं तस्यार्धं हारयोस्तरम् ।
चतुष्कूटार्कशाला च पञ्जरं षोडशान्वितम् ॥ ३६ ॥
हारान्तरं च द्वात्रिंशत्कल्प्यं रुद्रतलेऽपि च ।
भानुभूमित्रिशालं तु भानुभागविभाजिते ॥ ३७ ॥
पञ्जरं कूटकोष्ठं च संख्या रुद्रतले तु वत्(वा) ।
सर्वेषामपि कोष्ठानां पक्षांशं प्रविधीयते ॥ ३८ ॥
त्रयोदशतलव्यासं दशभागविभाजिते ।
कर्णकूटं शिवांशेन मध्ये शाला द्विभागया ॥ ३९ ॥
तयोर्मध्येऽर्धभागेन पञ्जरं कर्णकूटवत् ।
हारान्तरं च तस्यार्धं संख्या द्वादशभूमिवत् ॥ ४० ॥
चतुर्दशतलव्यासो वसुभागविभाजिते ।
शिवांशं कर्णकूटं स्यान्मध्ये शाला द्विभागया ॥ ४१ ॥
अर्धांशं पञ्जरव्यासं तस्योर्ध्वे हारयोस्तरम् ।
चतुष्कूटं चतुःशालं पञ्जरं षोडशान्वितम् ॥ ४२ ॥
हारान्तरं चतुर्विंशत्कल्प्यैवं तु म(ह्य)नुत्तमम् ।
त्रिःपञ्चभूमिषड्भागं विस्तारं द्वि(त्रि)भजेत्समम् ॥ ४३ ॥

कर्णकूटं तु व्योमांशं मध्ये शाला द्विभागया ।
हारान्तरं तु शश्यंशं युग्मपञ्जरसंयुतम् ॥ ४४ ॥
अशेषोर्ध्वतलव्यासो वेदभागविभाजिते ।
द्विभागविस्तृतं दण्डमानं नीव्रं तु मध्यमे ॥ ४५ ॥
कृत्वा प्रासादतुङ्गं तु द्विभागेन शतद्वयम् ।
धरातलं तु सप्तांशं चरणं च त्रयोदश ॥ ४६ ॥
सार्धपञ्च तु मञ्चोच्चं पादोच्चं भानुसंख्यया ।
प्रस्तरोच्चं तु षड्भागं रुद्रांशं चरणोदयम् ॥ ४७ ॥
सार्धभूतांशमञ्चं स्याद्दशांशं चरणोदयम् ।
भूतांशं मञ्चमानं तु नवांशं चरणोदयम् ॥ ४८ ॥
सार्धवेदांशमञ्चोच्चं कल्पयेत्कल्पवित्तमः ।
पादोच्चं सार्धवस्वंशं मञ्चमानं युगांशकम् ॥ ४९ ॥
वस्वंशं चरणोच्चं तु मञ्च(ञ्च)मानोदितं युत(ग)म् ।
चरणं सार्धसप्तांशं प्रस्तरं सार्धवन्ति(ह्नि)कम् ॥ ५० ॥
सप्ताग्निपाददीर्घं तु पादाधिक्याग्निमञ्चकम् ।
अर्धाधिकं षडंशं तु पादोच्चाग्निस्तु मञ्चकम् ॥ ५१ ॥
षडंशं पादमानं तु पादोनाग्न्यंशमञ्चकम् ।
अर्धाधिकं तु भूतांशं पाददैर्घ्यमुदाहृतम् ॥ ५२ ॥
अर्धाधिकं द्विभागं तु प्रस्तरस्योदयं भवेत् ।
सपादपञ्चभागं तु पाददीर्घमुदाहृतम् ॥ ५३ ॥
सार्धपक्षांशमञ्चोच्चं भूतांशं चरणायतम् ।
सपादपक्षभागं तु मञ्चमानमुदीरितम् ॥ ५४ ॥
पादोनपञ्चभागं तु चरणोदयमीरितम् ।
पञ्चभागं द्विभागं स्यात्सार्धवेदांशमङ्घ्रिकम् ॥ ५५ ॥
सत्रिमानशिवांशं तु प्रस्तरस्य समुच्छ्रयम् ।
शम्यं(श्यं)शं वेदिकामानं कण्ठोच्चं तद्द्विभागया ॥ ५६ ॥
अर्धाधिकयुगांशं तु शिखरोदयमीरितम् ।
सपादांशं शिखामानं कल्पयेत्तु क्रमेण च ॥ ५७ ॥
होमादि स्तूपिपर्यन्तं युगाश्रं परिकल्पयेत् ।
शिखरे तु चतुर्दिक्षु महानासीसमन्वितम् ॥ ५८ ॥

पादं प्रत्यल्पनासाढ्यं ब्रह्मकान्तमुदाहृतम्।
तदेव सोन्नतं मश्रं सौष्ठिकोन्नतकोष्ठकम्॥ ५९॥
सारस्वतमिदं ख्यातं शिवप्रियकरं गृहम्।
तदेव नतकूटं च कोष्ठोन्नतसमश्रकम्॥ ६०॥
प्रादेशमिति विख्यातं सर्वेषु(वेस)मृद्धिकारणम्।
तदेव शिखरं कण्ठं वस्वश्रं परिकल्पयेत्॥ ६१॥
शिखरेऽष्टौ(ष्ट)महानासीयुक्तं तच्छ्रीकरं भवेत्।
तदेव मध्यभद्राढ्यं कूटकोष्ठौ समोन्नतौ॥ ६२॥
समश्रो वाऽऽयमश्रो वा कूटशालो द्विजोत्तम।
पार्वतीकमिदं ख्यातं मम प्रीतिकरं भवेत्॥ ६३॥
तदेव शिखरं कण्ठं वृत्तमष्टाश्रवेदिकम्।
वेदिकाश्चैव वृत्ता वा वृत्ताकारघटाऽपि वा॥ ६४॥
सुशांभवमिदं ख्यातं शंकरस्य प्रियावहम्।
पञ्जरं कूटकोष्ठं च शिखरं च घटं तथा॥ ६५॥
एवमादीनि सर्वाणि नागराद्युचितं कुरु।
अनेनैवाथवा कुर्यादेकानेकेक(कादि)भूमया(यः)॥ ६६॥
यत्नल(न्त्वरत)म्भेषु कर्तव्यं तलं तस्मादि(द)मश्रकम्।
तत्तलस्योचितव्यासं तुङ्गकुड्यं च गर्भकम्॥ ६७॥
कर्तव्यं विधिना तेन गण्डा(घण्टा)लंकारसंयुतम्।
सालिन्द्रं सदनार्थं तु सोपानं रोहणाय वै॥ ६८॥
तत्र तत्रोचितं कुर्याच्छालाभिष्टकताद्रुमे।
तस्याग्रे मण्डपं कुर्यादेकानेकतलं तु वा॥ ६९॥
प्रायु(गु)क्तविधिना कुर्यात्सर्वालंकारसंयुतम्।
करालमुद्भिद्गुल्मासकल्पचित्तक(चैश्चित्ताकर्ष)णकर्मकृत्॥ ७०॥
नानाचित्रैर्विचित्रं तु कर्तव्यं विधिचोदितम्।
एवं यः कुरुते हर्म्यं स्वशक्त्या प्रोक्तयं तु(वृत्तु)वा॥ ७१॥
इहैव धनवाञ्श्रीमान्पुत्रपौत्रकलत्रकैः।
दासीदासादिभिश्चान्यैः स्वेच्छावंशो मुदाऽस्त्विह॥ ७२॥

सोनेककुलजातं च या(पा)रयेत्तु मुद्रा च मा(ना) ॥ ७२ ॥

इति काश्यपे षोडशभूमिविधानमेकचत्वारिंशः पटलः ।

---

अथ द्विचत्वारिंशः पटलः ।

---

## मूर्धेष्टकाविधानम् ।

---

अथ वक्ष्ये विशेषण मूर्धेष्टकाविधिं परम् ।
शिखरस्योदयार्धान्ते महानास्यवसानके ॥ १ ॥
शलि(शक्ति)ध्वजावसाने वा मूर्धेष्टकां तु विन्यसेत् ।
यावत्य(च्य)दासमाप्तं तु तदा मूर्धे द्विजोऽष्टमः(ष्टका द्विज) ॥ २ ॥
एकाद्यनेकभूमानां हर्म्याणां तु विशेषतः ।
इष्टकाव्यासमायामं घनं चाद्येष्टकामिव ॥ ३ ॥
प्रासादस्याग्रतो देशे सौम्ये वायौ च गोपुरे ।
नवाष्टसप्तषट्पञ्चहस्तं वा मण्डपं ततम् ॥ ४ ॥
तद्विस्तारसमायामं चतुरश्रं समं कुरु ।
मण्डपं वा प्रपा वाऽथ षोडशस्तम्भसंयुतम् ॥ ५ ॥
चतुर्द्वारसमायुक्तं चतुस्तोरणसंयुतम् ।
पडष्टं च नवं चैव वितानध्वजसंयुतम् ॥ ६ ॥
मुक्तास्रग्दर्भमालाभिरलंकृत्य विशेषतः ।
मण्डल(प)स्य त्रिभागैकां मध्ये कृत्वा तु वेदिकाम् ॥ ७ ॥
वेदाङ्गुलोन्नतां देशमुपवेदियुगत्रयम् ।
शेषं वेदिविशालं तु भानुमात्रं तदुन्नतम् ॥ ८ ॥
भानुद्वयाङ्गुलोच्चं तु दर्पणोदरसंनिभम् ।
इह चाग्निकु(स्थ)ण्डिलानि चतुरश्राणि कल्पयेत् ॥ ९ ॥
अथवा वालुकैः स्तूलैः ... .... .... ।
स्थण्डिलं कारणैर्दद्याद(कारयेदर्धाद्य)ष्टद्रोणैश्च शालिभिः ॥ १० ॥
तदर्धैस्तण्डुलैस्तुभ्यं (लैःस्तूप्यं) तदर्धैश्च तिलैरपि ।
लाजैश्चैव परिस्तीर्य श्वेताब्जं परिकल्पयेत् ॥ ११ ॥

नानापुष्पैः कुशैर्दर्भैः परिस्तीर्य विचक्षणः ।
मनोन्मनीकर्णिकायां तुदलेषु व्या[दलाया]मादि शक्तिनः॥१२॥
गन्धपुष्पादिभिर्यष्ट्वा सस्यमात्रैर्विशेषतः ।
लोहजं दारुजं वाऽथ स्तूपिदण्डं च कारयेत् ॥ १३ ॥
आसनं खादिरं वाऽथ तिन्तिणीसारमेव वा ।
मयूरं पद्मकण्डूरं भवेतद्दारुवत्ततम् ॥ १४ ॥
हेममुदितं ताम्रं वा त्रयसंमिश्र एव वा ।
ऊर्ध्वभूम्यग्नितुङ्गं तु स्तूपिदण्डायतं भवेत् ॥ १५ ॥
मूर्ध्नि शैलोपरिष्टात्तु स्तूप्यन्तं वा तदायतम् ।
ऊर्ध्वभूम्यत्र(मेश्च) विस्तारं स्तूपिमूलविशालकम् ॥ १६ ॥
तस्याग्रमङ्गुलव्यासे मूलाद्दारुक्रमात्कु(कृ)शम् ।
तुङ्गाणात्सर्म(यामात्समां)शं तु मूले वेदाश्रमाचरेत् ॥ १७ ॥
वंशं मध्यसमं त्वग्रे वृत्ताकारं प्रकल्पयेत् ।
चतुरश्रोपरिष्टात्तु सर्वं वृत्तमथापि वा ॥ १८ ॥
कर्तव्यं तस्य मूले तु शिखापान्तु(मानं तु) योजयेत् ।
दण्डमूलसमव्यासं दण्डं दण्डाग्रयोरपि ॥ १९ ॥
.... ... .... योजयेल्लोहजं बुधः ।
प्रक्षाल्य पञ्चगव्यैस्तु दण्डं चैवेष्टकाऽपि च ॥ २० ॥
कर्णिकायां न्यसेद्दण्डं कुमादीकु(क्रमादीश)महादिशि ।
चवाररत्वेषटा(चतस्रस्त्विष्टकाः)स्थाप्याःशिलादिष्टम्भकैर्जलैः ॥२१॥
पृथिव्यादिपरीजानी दण्डं तु विलिखेद्बुधः ।
प्राग्दिश्यष्टक्रमाद्दर्भगन्धपुष्पादिभिर्यजेत् ॥ २२ ॥
स्वर्णरजतताम्रैर्वा सूत्रैः कार्पासकैस्तु वा ।
कौतुकं बन्धयेद्विप्र स्वस्वबीजमनुस्मरन् ॥ २३ ॥
ब्रह्म विष्णुं च रुद्रं च ईश्वरं च सदाशिवम् ।
शक्ते(शैले)ष्टकादिदण्डान्तमधिदेवान्क्रमान्न्यसेत् ॥ २४ ॥
नैवेद्यं दापयेदेषां ताम्बूलं च निवेदयेत् ।
प्रत्येकं नववस्त्रेणाऽऽच्छादयेत्कूर्चसंयुतम् ॥ २५ ॥
अभितः कलाष्टधा(लशा)नष्टौ सकूर्चान्सापिधानकान् ।
गण्डा(न्धा)म्बुपूरिकं(तान्) वस्त्रहेमपुष्पसमन्वितान् ॥ २६ ॥

फलपल्लवसंयुक्तानष्टौ विद्येश्वराधिपान् ।
संस्थाप्य स्वस्वमन्त्रेण नैवेद्यान्तं समर्चयेत् ॥ २७ ॥
ततो होमः प्रकर्तव्यो ह्यग्न्याधानादिकं कुरु ।
समिधाज्यचरुलीजयरान्सद्यादिविबु(च्चर्वाज्यलाजैश्च यवैः सद्ध-
विषा बु)धः ॥ २८ ॥
शतं वा शतमर्धं वा प्रत्येकं जुहुयात्क्रमात् ।
परब्रह्मषडङ्गैश्च क्षुरिकाबीजमुख्यवै(कैः) ॥ २९ ॥
आज्येन जुहुयाद्धीमान्प्रत्येकं पञ्चविंशतिम् ।
जयादिराष्ट्रभा(नाऽभ्याता)नैश्च राष्ट्रभिश्चैव(भृद्भिश्च) होमयेत् ॥
ब्रह्मादिबीजमन्त्रैस्तु ह्यष्वाभ्या(हुत्वाऽऽज्या)नि तथाऽऽहुति(तीः) ।
एवं जागरणं रात्रौ प्रभाते विपुले शुभे ॥ ३० ॥
आचार्य(र्यो)मूर्ति वै(भिः)सार्धं स्नानं कृत्वा विधानतः ।
नव स्त्रधरोष्णीषो(ववस्त्रोष्णीषधरो) भस्मरुद्राक्षधारकः ॥ ३१ ॥
एवं यज्ञोपवीताढ्यः सितमाल्यानुलेपनः ।
हेमाङ्गुलीयकटककुण्डलाद्यैरलंकृतः ॥ ३२ ॥
यज्ञसूत्रादिसंयुक्तं भूषणैर्भूषि(ष्य)शिल्पिनम् ।
आचार्यो मण्डपं गत्वा दण्डेनाष्टघनानलान् ॥ ३४ ॥
गन्धपुष्पादिभिर्यष्ट्वा होमं कृत्वा जयादिभिः ।
स्विष्टमग्नेतिमन्त्रेण पूर्णाहुतिं समाचरेत् ॥ ३५ ॥
स्थित(र)राभ्यु(भ्यु)दये विप्रोभयराभ्युदयेऽपि वा ।
मीवो(ने)वा शुक्रसंयुक्ते तलोद्रि(तथा द)ष्टेऽथवा पुनः ॥ ३६ ॥
आचार्यशिल्पिभिश्चैव ने ह्यन्तोनुग्रहोपरि ।(!)
पुण्याहवाचनं वक्ष्य मूर्न्टेष्ट्रकां निधापयेत् ॥ ३७ ॥
इष्टकास्तूपिकल्पश्च बाह्यधामप्रदक्षिणे ।
नानालंकारसंयुक्ताः कृत्वा हर्म्येऽनुलेपयेत् ॥ ३८ ॥
उत्तराभिमुखो भूत्वा आचार्यो मन्त्र(र्योऽनन्य)चेतसा ।
ब्रह्म विष्णुं च रुद्रं च ईश्वरं च सदाशिवम् ॥ ३९ ॥
विचिन्त्य स्वस्वमन्त्रैस्तु चतस्रो ह्यिष्टका न्यसेत् ।
पृथिव्यात्मकं रूपं तु सौम्याग्रं शांकरेषु च ॥ ४० ॥

सुषे स्थाने मया(त्वाग्ने)यमा(मा)श्रित्य प्रागग्रं स्व(त्व)म्भसात्मकम् ।
सुषे नैर्ऋत्यमाश्रित्य सौम्याग्रं सलिलात्मकम् ॥ ४१ ॥
सुषे वि(वा)यव्यमाश्रित्य प्रागग्रं मरुतात्मकम् ।
एवं क्रमान्न्यसेद(श्मा)त् सुनिच्छिद्रं समाचरेत् ॥ ४२ ॥
माणिक्यमरतकं(कतं)चैव वैडूर्यं त्विन्द्रनीलकम् ।
मौक्तिकं स्फटिकं चैव पद्मरागं प्रवालकम् ॥ ४३ ॥
वज्रं मध्ये दिषु(शि)स्थाप्यं शक्तिबीजमनुस्मरन् ।
तदूर्ध्वे स्थापयेत्स्तूपिदण्डमीशानमन्त्रतः ॥ ४४ ॥
कलशस्थोदकैः प्रोक्ष्य दण्डं चाश्म(पाषाण)पञ्चकम् ।
तत्तन्मूर्तीः समभ्यर्च्य गन्धैः पुष्पैश्च धूपकैः ॥ ४५ ॥
गलाम्भसा च सुदृढं स्थापयेद्वास्तुनिश्चलम् ।
ततोऽवशेषशिखरं कर्तव्यं स्थो(चो)दिता तथा ॥ ४६ ॥
शिखरोपरिष्टाच्च स्तूपिं प्रागुक्तविधिना कुरु ।
करालादींस्ततः कुर्यान्निश्चलं सुदृढं यथा ॥ ४७ ॥
स्वर्णैर्वा रजतैर्वाऽथ ताम्रैर्वाऽऽच्छादयेद्दृढम् ।
काञ्च(गां च) तलकृतार्थे च मा(आ)चार्याय प्रदापयेत् ॥ ४८ ॥
दक्षिणां दापयेत्तस्मै दशनिष्कं हिरण्मयम् ।
यागोपकरणं सर्वमाचार्याय च दापयेत् ॥ ४९ ॥
शिल्पिनो भो(नः पू)जयेत्पश्चाद् गोभूमिकाञ्चनादिभिः ।
एवं यः कुरुते मर्त्यः सोऽश्नाग्नि(सयाति)शुभदं फलम् ॥ ५० ॥

इति श्रीकाश्यपशिल्पे मूर्धेष्टकाविधानं द्विचत्वारिंशः पटलः ।

---

अथ त्रिचत्वारिंशः पटलः ।

---

प्राकारः ।

---

अथ वक्ष्ये विशेषेण प्राकाराणां च लक्षणम् ।
रक्षार्थं शोभनार्थं च शालास्तु(याः)सदनस्य च ॥ १ ॥

प्रासादस्य विशालार्थं(र्धं)गुणभागैग(क)मेव वा ।
चतुर्भागैकभागं वा अन्तर्मण्डलविस्तृतम् ॥ २ ॥
अन्तर्हारविशालं तु तद्बाह्ये द्विगुणं हि तत् ।
मध्यहारविशालास्तु(लं तु)बाह्यान्तं मण्डलत्रयम् ॥ ३ ॥
मध्यादेस्तु विशालं च बाह्ये त्वादिचतुर्गुणम् ।
महामर्यादिविस्तार आद्यैः पञ्चगुणो भवेत् ॥ ४ ॥
प्रासादूचरणाद्विप द्धोवा(होमा)द्वा प्रथमस्य तु ।
प्रथमाद्द्वितीयनीव्रं तु द्वितीयात्तृतीयनीव्रकम् ॥ ५ ॥
तृतीयाच्चतुर्थं निष्क्रान्तं तस्मान्नीव्रं च पञ्चमम् ।
प्राकारं प्रतिनिष्क्रान्तं तस्मान्नीव्रं तु पञ्चमम्(तन्नीव्रं कुड्यसीमकम्)॥ ६ ॥
कुड्यमध्यमा(ध्याव)सानं वा कुड्यबाह्यं तथापि वा ।
अथवा शेषविप्राणां नीव्रं होमाद्विधीयते ॥ ७ ॥
प्रथमं प्रकृतेस्तुल्यं तस्माद्गुणाङ्गुलं नतम् ।
द्वितीयाद्यं तु पञ्चान्तं तद्वदेव नतं क्रमात् ॥ ८ ॥
कल्पत्रं(ल्प्यं वै)हर्म्यमानेन हस्तमानमथोच्यते ।
त्रिपञ्चसप्तहस्तेन प्रथमं त्रिविधं भवेत् ॥ ९ ॥
नवैकादशहस्तं च त्रयोदशं द्वितीयकम् ।
त्रिपञ्चसप्तदशहस्तं मै(तथै)कोनविंशतिः ॥ १० ॥
मध्यहारं त्रिधा प्रोक्तं मर्यादास्तु ततः शृणु ।
एकविंशत्रयोविंशपञ्चविंशकरं भवेत् ॥ ११ ॥
सप्तविंश नवविंशमेकत्रिंशत्करेण तु ।
महामर्यादिविस्तार एवं त्रिविधमुच्यते ॥ १२ ॥
एवमाभासहर्म्याणां विकल्पानां च कल्पयेत् ।
सप्तहस्तं समारभ्य पञ्चत्रिंशावसानकम् ॥ १३ ॥
प्रत्येकं प्रथमादीनां सालानां त्रित्रिमानकम् ।
त्रिपञ्चसंख्यया प्रोक्तं हर्म्याणां चन्द्रसंख्यया ॥ १४ ॥
नवहस्तं समारभ्य हस्तत्रिंशावसानकम् ।
प्राग्वै सालसमाख्या तु हर्म्याणां जातिसंज्ञका ॥ १५ ॥
प्रागुक्तहर्म्यमानैश्च शालाद्यन्त्यं च संमतम् ।
पञ्चप्राकारमेवं हि त्रिप्राकारमथोच्यते ॥ १६ ॥

द्वितीयं तृतीयशालं च चतुर्थं च प्रगृह्यताम् ।
यत्र यद्विहितं सालं हर्म्यवृत्तं तु लक्षयेत् ॥ १७ ॥
तस्यामुखे मुखायामं कल्पयेत्कल्पवित्तमः ।
बीजात्पादवीजं त्वर्धं त्रिपादं च समं तु वा ॥ १८ ॥
द्विगुणं त्रिगुणं वाऽथ चतुःपञ्चगुणं तु वा ।
कल्पयेत्तु मुखायामं बीजमूर्ध्वं द्विजोत्तम ॥ १९ ॥
अन्तर्मण्डलभित्तेस्तु विस्तारो व्योमहस्तकः ।
तस्मात्त्रिमात्रवृद्ध्या वा पञ्चमात्रं वाऽथ वर्धयेत् ॥ २० ॥
सार्धहस्तद्विहस्तं तु महामध्यावसानकम् ।
भित्तिव्यासं समाख्यातमुत्सेधं शृणु सुव्रत ॥ २१ ॥
तद्व्यासात्त्रिचतुष्पञ्चगुणं वा सालतुङ्गकम् ।
अथवोत्तरसीमान्तं नीव्रान्तं वाजनान्तकम् ॥ २२ ॥
प्रस्तरेषु गलो वाऽथ सालतुङ्गमुदाहृतम् ।
ऋजुबीजतलोपेतं बाह्ये त्वभ्यन्तरार्जवम् ॥ २३ ॥
कुड्यमूलस्य विस्तारवस्त्वं(स्त्वं)शोनाग्रविस्तरम् ।
मूलादग्रं क्रमात्क्षीणं वस्वंशांशे द्विजोत्तम ॥ २४ ॥
अथवा हस्तमानेन सालोत्सेधं वदाम्यहम् ।
प्रथमं कलशान्तं तु द्वितीयं फलकान्वितम् ॥ २५ ॥
बोध्यंतं स्यात्त्रितीयं तु चतुर्थं मञ्चमा(का)न्तकम् ।
पञ्चमं तु कपोतान्तं पञ्चशा(सा)लोदयं क्रमात् ॥ २६ ॥
एताद्धि पञ्चशा(सा)लेषु तासामुक्तो ह्ययं विधिः ।
आवृतं मालिका वा स्यात्सहकारमथापि वा ॥ २७ ॥
मण्डपाकृतिकं वाऽथ ऋजुमध्यमथापि वा ।
भूतवेदगुणं पक्षव्योमभूममथोच्यते ॥ २८ ॥
कुड्यस्योपरि कुड्यं स्यात्पादं पादोपरि न्यसेत् ।
तलं प्री(प्र)ति तलं कुर्यात् पादं प्रत्यल्पनासिका ॥ २९ ॥
वक्ष्येऽहं पादमानं च पङ्क्तिमानं द्विजोत्तम ।
मूलहर्म्ये तु होमादि उत्तरान्तं यदुन्नतम् ॥ ३० ॥
तन्मानं सप्तधा भज्य पक्षांशं शु(सु)धरातलम् ।
पञ्चत्वं(ञ्चांशं)पाददीर्घं तु पादं सव्याङ्गसंयुतम् ॥ ३१ ॥

धरातलं तदुक्तं वा ह्युर्जमं वा प्रकल्पयेत् ।
मूलहर्म्ये तु हामादि उत्तरांशं नवांशके ॥ ३२ ॥
धरातलं द्विभागं स्यात्सप्तांशं चरणोदयम् ।
उत्तरान्तं तु हामादि रुद्रभागविभाजिते ॥ ३३ ॥
अधिष्ठानं गुणांशं स्याच्छेषं पादोदयं भवेत् ।
मूलप्रासादतुल्यं वा चरणं च धरातलम् ॥ ३४ ॥
पादोत्सेधांशमानं तु षट्सप्ताष्टौ तु वा भजेत् ।
एकांशं पादविष्कम्भं दारु(र)वाश्ममयं तु वा ॥ ३५ ॥
तत्त्रिभागं द्विभागं वा त्रिपादं वाऽर्धं एव वा ।
कुड्यपादस्य विस्तारं सर्वत्र परिकल्पयेत् ॥ ३६ ॥
त्रिचतुष्पञ्चहस्तं वा परितो मालिकाकृति ।
हस्तद्वयं समारभ्य पञ्चहस्तावसानकम् ॥ ३७ ॥
गुणाङ्गुलप्रवृद्धया च पङ्क्त्यायां पञ्चविंशतिः ।
भेदेन कथितं द्विम सर्वत्र समपङ्क्तयः ॥ ३८ ॥
युग्मायुग्मं तु वा पङ्क्तिः सर्वत्र परिकल्पयेत् ।
मूलभागविशालं तु धर्मनन्दाष्टभाजिते ॥ ३९ ॥
एकांशरहिताग्रं स्यान्मूलादग्रं क्रमात्कृशम् ।
अग्रपादविशालं तु दण्ड इत्यभिधीयते ॥ ४० ॥
दण्डं त्रिपादमर्धं च क्रमाच्छ्रेष्ठान्तराधमम् ।
उत्तरोत्सेधमाख्यातं विस्तारं मूलपादवत् ॥ ४१ ॥
मध्यपादसमं वाऽथ अग्रपादसमं तु वा ।
उत्तरव्यासमाख्यातं श्रेष्ठान्तराधमं क्रमात् ॥ ४२ ॥
उत्तरोच्चत्रिभागैक(वां)जनोत्सेधानि(धं तु)नीव्रकम् ।
उत्तरोत्सेधतुल्यं तु तुलानीव्रमुदाहृतम् ॥ ४३ ॥
तदर्धं वा त्रिपादं वा तस्य विस्तारमेव हि ।
वाजने व(गु)त्मकोर्ध्वे वा तुलास्थापनमाचरेत् ॥ ४४ ॥
तुलार्धनीव्रविस्तारं जयन्तस्य तुलोपरि ।
जयन्त्य(न्ता)र्धविशालोच्चमनुमार्गमुदाहृतम् ॥ ४५ ॥
तुलान्तरं तुलोच्चं तु जयन्त्याश्च तदन्तरम् ।
मनुमार्गं तथा कल्प्यं दण्डमानेष्टकान्तरम् ॥ ४६ ॥

कपोतादीनि नीव्राङ्गप्रस्तारोक्तवदाचरेत् ।
अथवा तुलोपरिष्टात्तु इष्टकास्तरणं कुरु ॥ ४७ ॥
सुधया गुडतोयैश्च इष्टकास्तरणं भवेत् ।
करालमुद्गगुलमाः सकल्कचिक्कणमाचरेत् ॥ ४८ ॥
इष्टकास्तरणं ह्येतच्छिला चेन्दुतलोपरि ।
शैलजोत्फलकाभिश्च च्छादयेत्तु विशेषतः ॥ ४९ ॥
वाजनोर्ध्वे तु वाऽऽसाद्य सुधाकर्म समाचरेत् ।
एवमादितलं प्रोक्तमूर्ध्वभूमिं वदाम्यहम् ॥ ५० ॥
मूलाग्रस्तम्भतुङ्गं तु मन्दमूलाष्टभाजिते ।
एकांशरहिताङ्घ्रिश्च तथैवोर्ध्वोर्ध्वभूमयः ॥ ५१ ॥
प्रस्तरं च तथार्धावमेकानेकतलोऽपि च ।
प्रस्तरोपरि कर्तव्यं भित्तिमेव परोदयम् ॥ ५२ ॥
छत्राकारं शिरोपेतं सदाकारमथापि वा ।
गोपानमथवा वाजं सदा कल्प्यान्तरे द्विज ॥ ५३ ॥
मृन्मयैर्लोष्टकैर्वाऽथ सारदारुमयैस्तथा ।
गोपानं छादनं कुर्याल्लुपक्रियाशिरोन्वितम् ॥ ५४ ॥
सभाकारमिदं ख्यातं यथेष्टं तेषु कल्पयेत् ॥ ५५ ॥
जातिपञ्चतलं ख्यातं छन्दवेदतलं भवेत् ॥ ५६ ॥
विकल्पं तत्तलं विद्यादाभासत्वेव भूमिके ।
जात्यादीनां तु हर्म्याणां योग्यं सालतलं कुरु ॥ ५ ॥
मर्यादिसालमाश्रित्य पात(त्र)के पचनालयम् ।
नैर्ऋत्य आयुधस्थानं वायव्यं शयनार्हकम् ॥ ५८ ॥
शाङ्करे योगशाला स्याद्भृशभागेऽथवा पुनः ।
आग्निश्च(ग्नेय)याम्ययोर्मध्ये कर्तव्यं जननालयम् ॥ ५९ ॥
सका(शक्र)शांकरयोर्मध्ये मञ्च(ज्ज)नालयमेव हि ।
धान्यस्थानं च तत्पार्श्वे भृङ्गराजश्(प)थेऽपि वा ॥ ६० ॥
निर्ऋतिवारुणीमध्ये पुस्तकारक्षता(नां महा)लयम् ।
तत्पार्श्वयोः प्रकर्तव्यं व्यञ्जनालयमुत्तमम् ॥ ६१ ॥
सोमवायव्ययोर्मध्ये वस्त्राणामालयं कुरु ।
सोमशंकरयोर्मध्ये गौर्यावासं प्रकल्पयेत् ॥ ६२ ॥

तत्पार्श्वे शयनस्थानं पर्यङ्केन समन्वितम्।
पुष्पदन्तपदे वाऽथ महेन्द्र(माहेन्द्रे)पुष्पमण्डप{।। ६३।
गृहक्षपपदे कुर्याद्धान्यालयं द्विजोत्तम।
पाचि(रि)तो मालिकायां च एवमेव प्रकल्पयेत्।। ६४।।
मालिकात्वंरेपि(न्ते तु सो)मांशे कूपस्थानमुदाहृतम्।
अथवाऽन्यप्रकारेण वक्ष्ये संदेशनिर्णयम्।। ६५।।
शक(शंक)शांकरयोर्मध्ये विद्यास्थानमुदाहृतम्।
शंकरस्यांश(श्रीद)योर्मध्ये धनव्यास(स्थान)मुदाहृतम्।। ६६।।
याम्यपावकयोर्मध्ये पुष्पमण्डप उच्यते।
याम्यतैरुभ(नैर्ऋत)योर्मध्ये स्नानाम्बुकोष्ठमुच्यते।। ६७।।
निर्ऋतिवारुणीमध्ये धर्मश्रवणमण्डपम्।
वायव्यवारुणीमध्ये आयुधस्थानमुच्यते।। ६८।।
वायव्यसौम्ययोर्मध्ये शयनस्थानमुच्यते।
ईशानसौम्ययोर्मध्ये यागार्थं मण्डपं कुरु।। ६९।।
जयन्ते मज्जनशाला(नागार)स्यादा(मा)ग्नेये पचनाद(ल)यम्।
परितो मालिकायां तु सकलस्थानमुच्यते।। ७०।।
शांकरे नृत्तमूर्तिस्तु आग्नेय्यां वृषवाहनम्।
उमां स्कन्दं च सहितं नैर्ऋत्ये परिकल्पयेत्।। ७१।।
कङ्कालं वायुदिग्भागे भिक्षाटनं जयन्तके।
सुखासं तु सत्यांशे वितथे त्रिपुरान्तकम्।। ७२।।
सुग्रीवे हरिरुद्धं स्याद् गन्धर्वे चन्द्रशेखरम्।
शेषांशे कामदहनं मुख्ये कालारिमूर्तिकम्।। ७३।।
उदितेऽर्धनारिमूर्तिस्तु महेन्द्रे कल्याणसुन्दरम्।
क्षेत्रपालं तु पर्जन्ये याम्ये वै दक्षिणेश्वरम्।। ७४।।
वारुणे लिङ्गमुद्भूतं सौम्ये तु गजहारिणम्।
इत्यर्धधर्म (हर्म्य)ईशांश्च अन्तरालेषु कल्पयेत्।। ७५।।
मूलहर्म्यं समीक्ष्यैव सकलस्थापनं कुरु।
प्राकारेषु चतुर्दिक्षु द्वाद(र)शोभादि कल्पयेत्।। ७६।।
प्राकारततिमध्ये तु दीर्घमध्येतिवेचनम्।
अथवा मूलहर्म्यस्य मध्यसूत्राश्रितं भवेत्।। ७७।।

प्रधानद्वारमेकं वा द्वयं वाऽन्यत्तु जालकम् ।
प्राकारमेवमाख्यातं बाह्ये विधिर्विधीयते ॥ ७८ ॥
एकद्वित्रिचतुष्पञ्चदण्डबाह्यादिविस्तृतम् ।
तद्बाह्ये तु त्रयश्रेणिमनेन विधिना कुरु ॥ ७९ ॥
शैवानां परिवाराणां प्राच्यमावासमुच्यते ।
प्राच्यां वा सौम्यदेशे वा देशिकावासमुच्यते ॥ ८० ॥
दैवज्ञाम्बष्ठभिषजां वासस्थानं च याम्यके ।
निबन्धाहारजातानां पश्चिमे वासमुच्यते ॥ ८१ ॥
सर्वेषामपि भक्तानां वासमुत्तरपार्श्वके ।
अग्नौ महाव्रतस्थानं याम्ये पाशुपतालयम् ॥ ८२ ॥
कलामुखं तु नैर्ऋत्ये चोर्ध्वालयं तु वारुणे ।
वायौ तु आर्हतस्थाने सौम्ये भूसुरसत्रकम् ॥ ८३ ॥
ज्ञानाभ्यासादधः कुर्याद्वैश्यानां तु विशेषतः ।
तद्बाह्ये त्वीशदिग्भागे कार्यं महाजलाशयम् ॥ ८४ ॥
याम्यपावकयोर्मध्ये गोशालांशं प्रकल्पयेत् ।
वारुणीनैर्ऋतीमध्ये सूतिकावासमुच्यते ॥ ८५ ॥
वारुणानिलयोर्मध्ये रोगार्तानां निवासकम् ।
सौम्यवानिल(यव्य)योर्मध्ये बालशिक्षार्थमण्डपम् ॥ ८६ ॥
सोमशंकरयोर्मध्ये धान्यमञ्जलिका भवेत् ।
तद्बाह्ये बलिते विप्र दासीनां गणिकादिनाम् ॥ ८७ ॥
नृत्तगेयाभ्यसानां (सतां) तु क्रयविक्रयजीविनाम् ।
चक्रिनां (चक्रिणां) वापकानांच कुलालानां तथैव च ॥ ८८ ॥
मत्स्यमांसोपजीवानां न तु (नृत)कारकयोष्ठना(षिता)म् ।
पिताश्मशूद्रकानां तु गोपालानां च कारुणाम् ॥ ८९ ॥
करणानां गृहश्रेणीचापस्थानपरिग्रहम् ।
परितः कल्पयेद्धीमान्पूर्वाद्याशावसानकम् ॥ ९० ॥
तद्बाह्ये त्वीशदिग्भागे श्मशानं परिकल्पयेत् ।
दक्षिणे चोत्तरे वाऽपि स्थापत्यादिनिवासकम् ॥ ९१ ॥
तासां बाह्ये तु कर्तव्यं रजकानां निवासकम् ।
तद्बाह्ये के(क्रो)शमात्रे तु चण्डालश्रेणिरुच्यते ॥ ९२ ॥

प्राकारलक्षणं ह्येवं प्रोच्यते द्विजसत्तम ॥ ९३ ॥

इति काश्यपशिल्पे प्राकारलक्षणं त्रिचत्वारिंशः पटलः ।

---

अथ चतुश्चत्वारिंशः पटलः ।

---

मण्डपः ।

---

अथ वक्ष्ये विशेषेण मण्डपानां तु लक्षणम् ।
प्रासादत्वे(स्यै)कभूमौ तु प्रोच्यते मुखमण्डपः ॥ १ ॥
जातिश्च(च)न्द्रविकल्पानामाभासानां तथैव हि ।
प्रासादादिमुखे चैव दिशासु विदिशासु वा ॥ २ ॥
ग्रामादीनां तु मध्ये वा दिशासु विदिशासु च ।
उद्याने वा नदीतीरे तटाके वाऽथवा पुनः ॥ ३ ॥
देवार्थं मण्डपं कुर्यादष्टदिङ्मुखमण्डपम् ।
प्रासादस्याग्रतः कुर्यान्मडपं तु (पाना) चतुष्टयम् ॥ ४ ॥
मुखमण्डपमादौ तु प्रतिमामण्डपं ततः ।
स्नापनार्थं तृतीयं तु नृत्तार्थं च चतुष्टय(र्थक)म् ॥ ५ ॥
तेषु वै प्रथमं प्राग्वद्द्वितीयादीनि चो(दिरथो)च्यते ।
अन्तप्राराणि चैतानि(हारांश्च तानेतान् )मध्यहारादि(रांश्च) वा कुरु ॥
मण्डपं म(पान्म)ण्डपं तत्र शालाद्वा मण्डपान्तरम् ।
अन्तरालमिति ख्यातमादौ तल्लक्षणं शृणु ॥ ७ ॥
एकद्वित्रिश्चतुष्पञ्चषट्सप्ताष्टकरं तु वा ।
नवधर्ममध(थो)वाऽपि रुद्रहस्तमथापि वा ॥ ८ ॥
अन्तरालविशालं तु(लस्य) रुद्रसंख्या प्रकीर्तिता ।
यत्र यन्मण्डपं कुर्यात्तस्मिन्पङ्क्त्या विशेषतः ॥ ९ ॥
एकद्वित्रिचतुष्पञ्चभक्त्या वाऽभ्यन्तरालकम् ।
सावकाशान्तरालं वा भित्तिमध्यमथापि वा ॥ १० ॥
भित्तिमध्यान्तरालं चेत्पार्श्वयोर्वेशसंयुतम् ।
एकद्वित्रि अ(ऽय)ग्रपादं वा केशं (वेशं)भक्त्येकमेव वा ॥ ११ ॥

द्वयोर्मध्यमे(ध्ये च)द्वारं वा जालकं वा प्रकल्पयेत् ।
उत्तरे जलधारांश्च स्नानार्थं परिकल्पयेत् ॥ १२ ॥
युग्मायुग्मं तु पङ्क्तिर्वाऽभ्यन्तरालं द्विजोत्तम ।
अधिष्ठानादिसर्वाङ्गं मण्डपस्य समं भवेत् ॥ १३ ॥
अन्तरालं समाख्यातं शृणु मण्डपलक्षणम् ।
त्रिहस्तं तु समारभ्य द्विद्विहस्तविवर्धनात् ॥ १४ ॥
एवमेकोनविंशं तु नवधा मण्डपं भवेत् ।
आभाससदनानां तु आभासं मण्डपं भवेत् ॥ १५ ॥
एकविंशतिहस्तादिद्विद्विहस्तविवर्धनात् ।
सप्तत्रिंशतिहस्ता(त्करा)न्तं च विकल्पं नवधा भवेत् ॥ १६ ॥
आभासानां च तद्योग(ग्यं)स्वस्वयोग्यमथापि वा ।
नवत्रिंशतिरा(तमा)रभ्य द्विद्विहस्तविवर्धनात् ॥ १७ ॥
पञ्चाधिकं तु पञ्चाशत्करांशं छन्दमुच्यते ।
सप्तपञ्चदशाऽऽरभ्य द्विद्विहस्तविवर्धनात् ॥ १८ ॥
साग्निसप्ततिहस्तान्तं प्रसृता जातिरुच्यते ।
तद्विस्तारसमं दीर्घं समाश्रं मण्डपं भवेत् ॥ १९ ॥
अध्यर्धहस्तमारभ्य षट्षडङ्गुलवर्धनात् ।
पञ्चहस्तविधिर्या(स्तावधि या)वत् पङ्क्तिन्यासं तु कल्पयेत् ॥ २० ॥
अर्धहस्तं समारभ्य यावत्पञ्चकरावधि ।
गुणाङ्गुलविवर्धा(वृद्ध्या)तु पङ्क्तिन्यासं प्रकल्पयेत् ॥ २१ ॥
सार्धद्विहस्तमारभ्य षडङ्गुलविवर्धनात् ।
स्तम्भानामुदयं स्तं(?) स्तम्भव्यासमथोच्यते ॥ २२ ॥
वस्वङ्गुलं समारभ्य अर्धाङ्गुलविवर्धनात् ।
एकोनविंशमात्रं तु त्रयोविंशाङ्घ्रिविस्तृतम् ॥ २३ ॥
पादोच्चं भानुरुद्रांशे दश वै चाष्ट वा भजेत् ।
मूलाकारं तदेकांशं दन्तधूतूनमग्रकम् ॥ २४ ॥
तालिवा(पा)र्श्वतलोत्तुङ्गं सामान्यं सर्वमण्डपे ।
चली(तलि)पोच्चे तु भूतांशे द्विभागं च तलोदयम् ॥ २५ ॥
अङ्घ्रितुङ्गाग्निवेदैकभागं वाऽपि मयूरकम् ।
उपपीठमधिष्टानं केवलं वा मसूरकम् ॥ २६ ॥

धरातलसमं प्रोच्चं द्विगुणं त्रिगुणं तु वा ।
उपपीठोदयं ख्यातमुपपीठार्थय(र्धत्र)त्तु वा ॥ २७ ॥
उपपीठमधिष्ठानं चरणं प्रस्तरं तथा ।
नीव्रवेशमलंकारं गुण्यं प्रागिव विद्यते ॥ २८ ॥
पङ्क्तित्रयसमायुक्तं षोडशस्तम्भसंयुतम् ।
*लालपनासिकोपेतं मध्ये कूटं तु एव वा ॥ २९ ॥
मण्डितं बाऽथ सर्वत्र चतुर्द्वार इति(युतं)तु वा ।
अष्टिदिग्वा(ष्टदिग्द्वा)रमेकं वा द्वयं वा जालकोष्ठादिक् ॥ ३० ॥
बाह्ये सोपानसंयुक्तं चित्रितं तोरणादिभिः ।
तोरणादिविहीनं वा कल्पैवं प्रथमं भवेत् ॥ ३१ ॥
चतुर्भक्त्या विशालं तु अष्टदिग्द्वारसंयुतम् ।
पूर्वेऽपरे(र्वापर)द्विपत्ये(ङ्क्त्ये)कभक्त्या विस्तारनीव्रकम् ॥ ३२॥
मध्यस्थाङ्घ्रिं परित्यज्य ऊर्ध्वे कूटं द्विभाक्तिकम् ।
वसुपञ्जरसंयुक्तं द्वितीयं मण्डपं भवेत् ॥ ३३ ॥
पञ्चभक्त्या विभाश्रं(शालं)तु मध्ये कूटं द्विभागया ।
मण्डपं परितोऽशोनद्वात्रिंशच्चरणान्वितम् ॥ ३४ ॥
भानुद्विगुणसंराष्ट्रं पञ्जराष्टकसंयुतम् ।
इष्टदिग्द्वारसंयुक्तं द्वारन्य(म)त्रैककुड्यकम् ॥ ३५ ॥
द्वारस्थाने तु सोपानं सर्वालंकारसंयुतम् ।
कुड्यकुम्भलताद्यैस्तु भूषितं तु तृतीयकम् ॥ ३६ ॥
चतुरश्रं तु षड्भक्त्या मध्ये कूटं विभागया ।
तत्कूटमष्टपादाढ्यं मध्ये रङ्गसमायुतम् ॥ ३७ ॥
चतुर्द्वारसमायुक्तमिष्टदिग्द्वारमेव वा ।
द्विभक्त्याऽपि हृतं चैव भक्त्यादिप्रथमायुतम् ॥ ३८ ॥
अष्टदिग्भद्रसंयुक्तं चतुर्दिग्भद्रमेव वा ।
चत्वारिंशतिचाष्टाङ्घ्रियुक्तं वा तत्र योदितम् ॥ ३९ ॥
चतुर्विशालपनासाढ्यं कुड्यकुम्भलतादिक(न्वित)म् ।
तोरणाष्टकसंयुक्तं तृतीयं मण्डपं त्विदम् ॥ ४० ॥
चतुरश्रं तु सप्तांशं षष्ठ्यङ्घ्रिकसमायुतम् ।
नवभागेन तन्मध्ये कूटं वा मण्डिताङ्गणम् ॥ ४१ ॥

द्वात्रिंशदव(ल्प)नासाढ्यं चतुर्दिग्भद्रसंयुतम् ।
त्रिभागैकांशविस्तारं निर्गमं मुखभद्रकम् ॥ ४२ ॥
मध्यरङ्गसमोपेतं द्विष्ट(तमिष्ट)कुड्यसंयुत(समन्वित)म् ।
सर्वालंकारसंयुक्तं पञ्चमं परिकीर्तितम् ॥ ४३ ॥
युगाश्रमष्टभक्त्या तु अशीतिचरणान्वितम् ।
चतुर्भागेन तन्मध्ये ऊर्ध्वकूटं प्रकल्पयेत् ॥ ४४ ॥
चतुर्दिग्द्वारसंयुक्तमिष्टदिक्चा(ग्द्वा)रमेव वा ।
मुखसोपा(पा)नमग्न्यंशैर्वासनीव्रसमन्वितम् ॥ ४५ ॥
मध्यरङ्गसमायुक्तं षडष्टनासिकान्वितम् ।
सर्वालंकारसंयुक्तं सप्तमं मण्डपं भवेत् ॥ ४६ ॥
चतुरश्रं दशांशं तु भाद्वादि(न्वधि)कदशाङ्घ्रिकम् ।
मध्ये चैवाष्टदिग्भागनवकूटसमायुतम् ॥ ४७ ॥
कूटोपरि नीव्रतांशे तु अ(त्व)न्तरालं प्रकल्पयेत् ।
पार्श्वान्मुखेन सोपानं दिशि भद्रसमन्वितम् ॥ ४८ ॥
सर्वालंकारसंयुक्तमष्टमं मण्डपं भवेत् ।
रुद्रभक्त्या युगाश्रं तु मध्ये द्व्यंशेन कूटकम् ॥ ४९ ॥
मुखे सोपानसंयुक्तमिष्टदिग्भद्रसंयुतम् ।
द्वारन्य(म)त्रैव कुड्यांशमिष्टभागावसानकम् ॥ ५० ॥
सर्वालंकारसंयुक्तं नवमं मण्डपं भवेत् ।
द्वादशांशे युगाश्रं तु मध्ये द्व्यंशेन कूटकम् ॥ ५१ ॥
मण्डपस्य तु बाह्ये तु अंशेनालिन्द्रमिष्यते ।
तद्विंशेन तु विस्तारनिष्क्रान्तः स्याच्चतुर्दशी ॥ ५२ ॥
साष्टषष्टिसमं पादमाद्यङ्गं तु प्रकल्पयेत् ।
सर्वालंकारसंयुक्तं दशमं मण्डपं भवेत् ॥ ५३ ॥
पेतमण्डपस्य तदायतम् ।
तस्योचितविभागं तु कृत्वा वा मण्डलं कुरु ॥ ५४ ॥
पङ्क्तित्रयविशालं तु पञ्चपङ्क्त्या विशालकम् ।
एकपार्श्वे पुरे वाऽथ पा(द्वा)रमंशेन कल्पयेत् ॥ ५५ ॥
पार्श्वे पा(द्वा)रयुतं द्वे तु त्रिंशदङ्घ्रिसमन्वितम् ।
तद्वव परितोंऽशेन मण्डपाभ्यन्तरे रसः ॥ ५६ ॥

लुपादोर्ध्वे हनं कुर्यादष्टाविंशाङ्घ्रिसंयुतम् ।
पुरे पारयुतं चेत्तु चरणं चाष्टविंशतिः ॥ ५७ ॥
अथवा पारहीनं तु त्रिरष्टचरणान्वितम् ।
पादं प्रत्यल्पनासाढ्यं वेदिजालकतोरणम् ॥ ५८ ॥
नानाकुम्भलताद्यैस्तु कल्पितं प्रथमं भवेत् ।
चतुर्भिर्विशालं तु आयामे तु षडंशकम् ॥ ५९ ॥
मण्डपं परितोंऽशेन कूटमभ्यन्तरेतरम् ।
द्विभक्तिविसृ(स्तृ)तं चैकभवत्या तु मुखभद्रकम् ॥ ६० ॥
द्धार्मि(द्वात्रिं)शच्चरणोपेतं मण्डपस्य द्वितीयकम् ।
विशालं पञ्चभक्त्या स्यादायामे सप्तभग(प्तभक्त)यः ॥ ६१ ॥
त्रिपञ्चपत्ति(ङ्क्ति)विस्तारं दीर्घा मध्ये सभा भवेत् ।
मण्डपं परितोंऽशे तु इष्टदिग्भद्रसंयुतम् ॥ ६२ ॥
चत्वारिंशतिपादाढ्यं सर्वालंकारसंयुतम् ।
वेदिकाद्यैः समायुक्तं तृतीयं मण्डपं भवेत् ॥ ६३ ॥
रसभक्तिविशालं तु वसुभक्त्यायतं भवेत् ।
द्विचतुर्भक्तिविस्तारं दीर्घमध्ये महोदयम् ॥ ६४ ॥
मण्डपं परितोऽष्टांशमिष्टदीर्घकभद्रकम् ।
षष्टिसंख्याङ्घ्रिसंयुक्तं चतुर्थं मण्डपं भवेत् ॥ ६५ ॥
तारे सप्तविभागे तु नवभक्त्यायु(य)तान्वितम् ।
त्रिभक्तिविस्तृतं पञ्चभक्त्यायामसमं करम् ॥ ६६ ॥
तारत्रयोदशांशेन मध्यंशं(ध्यांशां)शेन कूटकम् ।
इष्टदिक्कुड्यसंयुक्तं चतुर्दिग्भद्रसंयुतम् ॥ ६७ ॥
प्रमुखे नन्दभागेन मुखभद्रं प्रकल्पयेत् ।
सद्व्यं नवतीभक्त्या भक्त्याऽङ्घ्रिव(क)समन्वितम् ॥ ६८ ॥
सर्वालंकारसंयुक्तं द्वादशं मण्डपं भवेत् ।
त्रिपञ्चपङ्क्तिविस्तारमायामं चतुरश्रकम् ॥ ६९ ॥
मध्ये कूटं गुणांशेन श्वेने ऊर्ध्वसमन्वितम् ।
गुणांशं विस्तृतायामं मुखभद्रसमन्वितम् ॥ ७० ॥
इष्टदिक्कुड्यसंयुक्त अन्य(माय)ताङ्घ्रिसमन्वितम् ।
पञ्चांशं त्रिद्व्यातिथ्या द्विशनं चरणायतम् ॥ ७१ ॥

सर्वालंकारसंयुक्तं मण्डपं तु त्रयोदशम् ।
षोडशांशे युगाश्रं तु मध्ये कूटं द्विभागया ॥ ७२ ॥
साष्टातिथिसमायुक्तं द्विशतं पादमुच्यते ।
मुखभद्रसमांशेन तदर्थे(र्धे)नेतरे दिशि ॥ ७३ ॥
सर्वालंकारसंयुक्तो मण्डपः स्याच्चतुर्दशः ।
एवं हि मनुभेदेन युगाश्रं मण्डपं विदुः ॥ ७४ ॥
इत ऊर्ध्वं चतुस्त्रिंशदंशं सीमावसानकम् ।
चतुरश्रो मण्डपः स्यात्सर्वालंकारसंयुतः ॥ ७५ ॥
भित्तिस्तम्भं च परितः कर्तुरिच्छावशान्नयेत् ।
समाश्रमण्डपं त्वेतदायामाश्रमथोच्यते ॥ ७६ ॥
विस्तारं पङ्क्तितुल्येन सा(ल्यं स्यात्सा)यतं वाऽथ पङ्क्तयः ।
विस्तारं पङ्क्तिमानं तु गुणाङ्गुलविवर्धनात् ॥ ७७ ॥
सप्तविंशाङ्गुलं यावत्तावदायनवोदितम् ।
वर्धास्रोणं तथा वाऽथ मण्डपे न(म)करोदितम् ॥ ७८ ॥
नाश्रयेत्तु करं पूर्य(र्वे)मण्डपं तु समाचरेत् ।
अशेषघटसंख्या तु प्राग्वदायासि(म)माचरेत् ॥ ७९ ॥
मण्डपे परितोऽष्टांशे द(इ)ष्टदिग्भद्रसंयुतम् ।
त्रिभक्तिविस्तृतं चैव भक्त्या तन्मुखभद्रकम् ॥ ८० ॥
सप्ताधिक्यद्वयाधिक्यं पादमित्यभिधीयते ।
सर्वालंकारसंयुक्तं पञ्चमं मण्डपं भवेत् ॥ ८१ ॥
वसुभक्तिविशालं च दशभक्त्या तथाऽन्वितम् ।
द्विचतुर्भागविस्तारदीर्घमध्यस(म)होदयम् ॥ ८२ ॥
परितो मण्डपो ह्यंशं मध्यस्तम्भविवर्जितम् ।
इन्द्रादिन्द्रमुखाभद्रां(ङ्मुखभद्रं च)चतुर्द्व्यंशेन सुव्रत ॥ ८३ ॥
षण्णवत्यङ्घ्रिसंयुक्तं सर्वालंकारसंयुतम् ।
षष्ठमं मण्डपं ह्यत्र प्रोच्यते तु शिवार्हकम् ॥ ८४ ॥
नवभक्त्या तयालं तु रुद्रभक्त्या तयान्वितम् ।
एकत्रिभक्तिविस्तारं दीर्घमध्ये सभा भवेत् ॥ ८५ ॥
परितो देवभागं तु मण्डपं परिकल्पयेत् ।
त्रिचतुर्भागविस्तारं दीर्घस्यामुखभद्रकम् ॥ ८६ ॥

सर्वालंकारसंयुक्तमष्टमं मण्डपं भवेत् ।
इष्टदिक्चारुरङ्कं स्यात्कल्पयेत्परितो भवेत् ॥ ८७ ॥
एवं हि मनुभेदं च सायतं मण्डपं विदुः ।
त्रिचतुष्पञ्चषट्सप्तअङ्कणस्य तु एव वा ॥ ८८ ॥
सर्वेषां मण्डपानां च भित्तिन्यासं तु पञ्चधा ।
पादायामविशालेन दारुपादेन वा व्यथ(सम)म् ॥ ८९ ॥
सर्वेषां मुखभद्राणां करणं मण्डपाकृति ।
पार्श्वे सोपानसंयुक्तं हस्तिहस्तविभूषितम् ॥ ९० ॥
पञ्चषट्सप्तनवाष्टदण्डं वा तस्य विस्तृतम् ।
सपादं सार्धदण्डं वा हस्तिहस्तोदयान्वितम् ॥ ९१ ॥
यष्टिनानूर्ध्वकल्पं वा स्वश्रं हस्तिकहास्ति(स्त)कम् ।
तन्नीव्रं किंपुरेरस्य अग्रं ककुन्ताकृति ॥ ९२ ॥
मूलादष्टांशरहितमग्रवा(म)स्तु क्रमात्कृशम् ।
हस्तिहस्त्यन्तरं विप्र युग्मं वाऽयुग्मद(य)ष्टयः ॥ ९३ ॥
दण्डं सपाददण्डं वा सार्धं वा द्वित्रिमात्रकम् ।
द्विदण्डं वाऽथ धीषुश्च विस्तारं स्यात्तदेव हि ॥ ९४ ॥
नेन द्विगुणनीव्र तु अभयस्थानमण्डपे ।
यष्टेरुच्चाग्निभागैकं भागं स्यादामलोदयम् ॥ ९५ ॥
आदौ समतले स्थित्वा सव्यपादपुरःसरम् ।
सोपानारोहणं विद्यान्मर्त्यानां तु विधीयते ॥ ९६ ॥
मण्डपं ह्येवमाख्यातं गोपुरं शृणु सुव्रत ॥ ९७ ॥

इति काश्यपशिल्पे मण्डपलक्षणं चतुश्चत्वारिंशः पटलः ।

---

अथ पञ्चचत्वारिंशः पटलः ।

---

गोपुरलक्षणम् ।

---

अथ वक्ष्ये विशेषेण गोपुराणां तु लक्षणम् ।
अन्तर्मण्डलसालादिप्यसुन(विपुलं)प्रोच्यते क्रमात् ॥ १ ॥

द्वारशोभा द्वारशाला द्वारप्रासादहर्म्यकम् ।
द्वारगोपुरमित्येते क्रमान्नाम्ना प्रकीर्तिताः ॥ २ ॥
एकद्वित्रितला वाऽपि द्वारशोभां प्रकल्पयेत् ।
द्विभूमिर्वा त्रिभूमिर्वा चतुर्भूमिरथापि वा ॥ ३ ॥
द्वारशाला तु कर्तव्या साले स्यात्तु द्वितीयके ।
त्रिचतुष्पञ्चभूमिर्वा द्वारप्रासादमारभेत् ॥ ४ ॥
चतुष्पञ्चतलं वाऽथ षट्तलं वाऽथ हर्म्यकम् ।
पञ्चषट्सप्तभूमिर्वा द्वारगोपुरमिष्यते ॥ ५ ॥
अथवा सर्वसालेषु एकद्वित्रितलं तु वा ।
सोपपीठमधिष्ठानं... ... विनावाप्योपपीठकम् ॥ ६ ॥
तयोरुच्चयतः सर्वे नवपञ्च वदाम्यहम् ।
मूलप्रासादविस्तारं सप्ताष्टनवभाजिते ॥ ७ ॥
दशैकादशभागे च एकांशरहितं क्रमात् ।
शोभादिगोपुरान्तानां विपुलं कीर्तितं क्रमात् ॥ ८ ॥
विकल्पाहा(भा)सहर्म्याणां गोपुराणां ततस्त्विमे ।
मूलालयविशालं तु चतुष्पञ्चषडंशके ॥ ९ ॥
सप्ताष्टांशेन हीनं तु च्छन्दशोभोदयं भवेत् ।
मूलगेहत्रिभागैकं भागमर्धांशमेव च ॥ १० ॥
त्रिद्व्यंशं चतुरंशं तु गुणांशं च तथैव च ।
पञ्चभागे तु वेदांशं सालेषु प्रथमादिषु ॥ ११ ॥
शोभादिगोपुरान्तानां पतिर्जात्यायमा(जात्यायता)लयम् ।
कल्प्यैवं हर्म्यमानं स्यादथ मानवशात्ततः ॥ १२ ॥
द्विहस्तादिद्विरष्टान्तमेकहस्तविवर्धनात् ।
शोभादिगोपुरान्तानां प्रत्येकं त्रित्रिमानकम् ॥ १३ ॥
विकल्पाभासयोरेव चन्द्रहर्म्ये च लक्ष्यते ।
गुणहस्तं समारभ्य सप्तदशकरावधि ॥ १४ ॥
एकहस्तद्वि(वि)वृद्ध्या तु शोभादीनां त्रयं त्रयम् ।
चतुर्हस्तं समारभ्य यावदष्टादशं करम् ॥ १५ ॥
शोभादीनां क्रमाद्व्यासं जातिहर्म्ये विधीयते ।
प्रत्येकं त्रित्रिराकारनन्दपञ्चावधिर्भवेत् ॥ १६ ॥

एतमानेन विस्तारं क्षुद्राणामर्हकं क्रमात् ।
एवमेवोदितं विकर्तव्यं विपरीतं विपत्करम् ॥ १७ ॥
अथवा त्रिचतुष्पञ्चषट्सप्ताष्टनवं करम् ।
दशैकादशहस्तं तु अधमादित्रयं त्रयम् ॥ १८ ॥
सर्वहर्म्ये तथा शा(सा)ले यथेष्टं परिकल्पयेत् ।
महत्तरे तु श्रेष्ठाग्नित्वन्तरे मध्यमत्रयम् ॥ १९ ॥
क्षुद्राल्पयोः प्रशस्ता(स्ता)नि कन्यास्त्वेवमुच्यते ।
सर्वसालेषु कर्तव्यं कर्तव्यं सर्वदेशिके ॥ २० ॥
अथवाऽन्यप्रकारेण शोभादीनां च विस्तरम् ।
पञ्चहस्तं समारभ्य द्विद्विहस्तविवर्धनात् ॥ २१ ॥
त्रयोदशकारान्तं तु शोभाव्यासं तु कल्पय ।
पञ्चविंशत्कारारभ्य(रभ्य)त्रयस्त्रिंशत्कारान्तकम् ॥ २२ ॥
द्वारप्रासादविस्तारं पञ्चधा परिकीर्तितम् ।
पञ्चत्रिंशत्कारारभ्यं चत्वारिंशत्त्रयाधिकम् ॥ २३ ॥
पञ्चधा द्वारहर्म्यस्य विस्तारः परिकीर्तितः ।
सपञ्चचत्वारिंशत्पञ्चांत्रिव(श्चाशद्वो)पुरान्तकम् ॥ २४ ॥
द्विद्विहस्तविवृद्ध्या तु पञ्चधा गोपुरान्तकम् ।
द्वारामधनसाद्याय(रसाधनमाख्यातं)ततेना(त आ)यतनं शृणु ॥ २५ ॥
सपादं सार्धपादोनद्विगुणं द्विगुणं तु वा ।
सत्रिभागैकभागं तु द्विभागं वाऽऽयतं भवेत् ॥ २६ ॥
सो(शो)भादिगोपुरान्तानामिष्टायामं प्रगृह्यताम् ।
तेषु किञ्चिद्विशेषोऽस्ति तं विशेषं ण(न)वं शृणु ॥ २७ ॥
वि(द्वि)हस्तमानविस्तारं गृहीत्वैव विशेषतः ।
आयामं स(पु)र्ववत्कल्प्यमनेकेष्विष्टमायतम् ॥ २८ ॥
हस्तच्छन्दं प्रवृत्त्या वामन्यद्वा पूर्वमाचरेत् ।
आयादिशोभनोपेतं हस्तमानेन कल्पयेत् ॥ २९ ॥
तं विना हर्म्यमूलस्य वंशे द्वे कल्पितस्य तु ।
व्यासायामः समाख्यातस्तेषां तुङ्गमथोच्यते ॥ ३० ॥

विस्तारं सप्तधा भज्य शोभच्छं (भोच्चं) रुद्रभागया ।
ताराध्यर्धादिक(र्धाधिक)तुङ्गं तु द्वारशालोच्छ्रयं भवेत् ॥ ३१ ॥
सप्तभागे तु रुद्रांशं मान्वंशं वा तृतीयके ।
विस्तारे तु नवांशे तु मध्यमं शो(स्या)च्चतुर्थके ॥ ३२ ॥
विस्तारजीवनोत्सेधे महागोपुरमुच्यते ।
होमादिस्तूपिपर्यन्तं मात्तो(नो)च्चं तु प्रकीर्तितम् ॥ ३३ ॥
विस्तारायामयोर्मानं सूत्रे प्राग्बाह्यमुच्यते ।
तद्बाह्ये कूटकोष्ठादिनीव्रं प्रासादच(व)द्भवेत् ॥ ३४ ॥
विस्तारस्य त्रिभागैकं चतुर्भागैकमेव वा ।
पञ्चभागे त्रिभागे वा प्राग्बाह्ये तु निसर्गतः ॥ ३५ ॥
सार्धहस्तं समारभ्य षट्षडङ्गुलवर्धनात् ।
पञ्चहस्तावधिर्यावत्क्षुद्राणां द्वारविस्तृतम् ॥ ३६ ॥
आल्पानां च तथा प्रोक्तं संनराणां ततः शृणु ।
त्रिहस्तं तु समारभ्य यावत्सप्तकरावधि ॥ ३७ ॥
षडङ्गुलविवृध्द्या तु द्वारव्यासं प्रकीर्तितम् ।
चतुर्हस्तं समारभ्य .... पञ्चदश याकरान्तकम् ॥ ३ ॥
रसमात्रविवृद्ध्या तु महते द्वारविस्ततम् ।
तारे सप्तांशविंशांशं सप्तांशे तु दशांशकम् ॥ ३९ ॥
अत्यर्थ (र्धं) पादहीनं तु द्विगुणं द्विगुणोन्नतम् ।
सार्धपादं तु पादं वा द्वारोत्सेधं तु सप्तधा ॥ ४० ॥
लिङ्गस्य मध्यमद्वारं मध्यमं तु वदाम्यहम् ।
शक्तेश्च भूतयोर्मध्ये नवांशकविशेषतः ॥ ४१ ॥
लिङ्गमध्यं तु रामे तु द्वारमध्यं प्रयोजयेत् ।
शोभादिगोपुरान्तानां द्वारमध्यं क्रमोदितम् ॥ ४२ ॥
तन्मध्ये गोपुरायामं स्तम्भयोः पार्श्वयोः समम् ।
द्वारयोगकवाटं च द्वारलक्षणवत्कुरु ॥ ४३ ॥
गुणपङ्क्ति समारभ्य यावदेकोनविंशतिः ।
तावत्पङ्क्तिस्तु विस्तारेष्वेवमेवं प्रकल्पयेत् ॥ ४४ ॥
यावद्विन्द्रकृतिर्व्यस्तास्तावदेवाथ पङ्क्तयः ।
विस्तारे पञ्चभागे तु गुणांशं गर्भगेहकम् ॥ ४५ ॥

शेषं कुड्यविशालं स्यादेकभूमौ द्विजोत्तम ।
परितः कुड्यविस्तारं मानेनैव प्रकल्पयेत् ॥ ४६ ॥
एवमेकतलं ख्यातं द्वितलं तु तथोच्यते ।
त्रिस्तारे पञ्चभागं स्यादायामेऽपि तथैव च ॥ ४७ ॥
दशांशं गर्भगेहं तु सार्धांशं कुड्यविस्तृतम् ।
कर्णकूटं तु मे(मी)नांशं शालादीर्घं विशालकम् ॥ ४८ ॥
हारान्तरं तदंशेन विस्तारे त्वेवमेव च ।
शालादीर्घं तु पञ्चांशमायामे तु प्रकल्पयेत् ॥ ४९ ॥
हारान्तरं तु कूटं च एकैकांशेन कल्पयेत् ।
कूटान्तरसमायामं शेषं हारान्तरेऽ(रा)न्वितम् ॥ ५० ॥
हारान्तरार्धमानेन भद्रं वा भद्रपञ्जरम् ।
द्वितलं ह्येवमाख्यातं त्रितलं त्वधुनोच्यते ॥ ५१ ॥
नवांशं विभजेद्वा(द्व्यास)मायामं च तलं भवेत् ।
गर्भगेहं गुणांशं स्यादंशेन ग्रहपिण्डिका ॥ ५२ ॥
अलिन्द्रं त्वेकभागेन हारव्यासं शिवांशकम् ।
कर्णकूटं शिवांशेन शालादीर्घं गुणांशकम् ॥ ५३ ॥
एकांशं पञ्जरं ख्यातमर्धांशं हारयोत्तरम् ।
कल्पैवा(ल्प्यैव)मादिभूमिं च द्वितलं पूर्ववद्भवेत् ॥ ५४ ॥
अथवाऽन्यप्रकारेण त्रितलं शृणु सुव्रत् ।
द्वारभागं तु विस्तारं रुद्रांशं तु तदायतम् ॥ ५५ ॥
गुणांशं गर्भगेहं तु गृहपिण्ड्यंशमुच्यते ।
त्रितलं तत्समाख्यातं हारभागेन कल्पयेत् ॥ ५६ ॥
अलिन्द्रांशं तु कुड्यं वा गर्भगेहान्वितं तु वा ।
आयामे पञ्चभागेन कोष्ठदीर्घं प्रकल्पयेत् ॥ ५७ ॥
शेषं पूर्ववदुद्दिष्टं द्वितीयं द्वितलोक्तवत् ।
त्रितलं चैवमाख्यातं चतुर्भूमि(स्तल)मथोच्यते ॥ ५८ ॥
विस्तारे तु दशांशे तु तद्वदायामपङ्क्तयः ।
गर्भगेहत्रिभागं हि सार्धांशं कुड्यविस्तृतम् ॥ ५९ ॥

आलिन्द्रं शिवभागेन हारव्यासं तथैव च ।
पञ्जरं कर्णकूटं च एकैकांशेन कल्पयेत् ॥ ६० ॥
कूटतारसमायामं शेषं हारान्तरेऽन्वितम् ।
शालायामे तु वेदांशे अर्धांशं हारयोत्तम(र)म् ॥ ६१ ॥
आदिभूम्येवमाख्यातमूर्ध्वं पूर्ववदाचरेत् ।
विस्तारे तु दशांशे तु भान्वंशं तु तदालयम् ॥ ६२ ॥
पूर्वेऽपरे च शालायां पञ्चभागेन कल्पयेत् ।
शेषं पूर्ववदुद्दिष्टं चतुर्भूमि(स्तल)मिदं परम् ॥ ६३ ॥
तारमेकादशांशं तु आयामं च तथैव हि ।
पूर्वेऽपरे च पार्श्वे च शालापञ्चांशमायतम् ॥ ६४ ॥
एकांशं पञ्जरव्यासं कूटव्यासं शिवांशकम् ।
हारान्तरं तथाऽर्धांशं कल्प्यैवं(कल्प्यं वै) प्रथमं तलम् ॥ ६५ ॥
तस्योर्ध्वं त्र(भू)मयः सर्वे(र्वाः)पूर्ववत्परिकल्पयेत् ।
तारमेकादशांशे तु तद्दीर्घं तु त्रयोदशे ॥ ६६ ॥
गुणांशं गर्भगेहं च द्विभागं भक्तिविस्तृतम् ।
अलिन्द्रं भागया (तः) कल्प्यं हारभागेन कल्पयेत् ॥ ६७ ॥
पार्श्वे शाला तु वेदांशं षडंशं मुखपृष्ठयोः ।
हारान्तरं शिवांशं स्याद्व्योमपञ्जरकूटयोः ॥ ६८ ॥
शेषं पूर्ववदुद्दिष्टं रसभूम्येवमेव तु ।
त्रयोदशांशविष्कम्भे आयामे च तथैव हि ॥ ६९ ॥
भूतांशं गर्भगेहं तु गृहपिण्डी द्विभागया ।
आलिन्द्रं तु शिवांशेन खण्डहर्म्यं शिवांशकम् ॥ ७० ॥
कोष्ठायामं तु भूतांशं रसांशेन च पञ्जरम् ।
कूटमंशेन कर्तव्यं हारान्तरं तथैव च ॥ ७१ ॥
अथवा तत्र दशान्तरमायामं तु त्रिपञ्चकम् ।
मुखे मुखे महाशाला सप्तांशेन प्रकल्पयेत् ॥ ७२ ॥
पञ्चभागेन कर्तव्यं पार्श्वयोः कोष्ठदीर्घकम् ।
शेषं पूर्ववदुद्दिष्टं सर्वालंकारसंयुतम् ॥ ७३ ॥
सप्तभूमिसमाख्यातं महागोपुरकं भवेत् ।

॥ अथाष्टसप्ततितमः पटलः ॥

---

अथ वक्ष्ये विशेषेण लिङ्गोद्भवमिदं शृणु ।
लिङ्गाकारस्य मध्ये तु चन्द्रशेखरमूर्तिवत् ॥ १ ॥
नलका पाद(काऽङ्घ्रि)तलाविम लिङ्गगूढसमन्वितम् ।
पितामहसरूपेण ऊर्ध्वाङ्गं वामपार्श्वके ॥ २ ॥
विष्णुवाहनरुपेण दक्षिणांशं तथागतम् ।
विष्णुर्दक्षिणपार्श्वे तु वामपार्श्वे पितामहः ॥ ३ ॥
हृदयाञ्जलिसंयुक्तौ स्थितौ तु लिङ्गमुच्यते ।
रक्तश्यामहिरण्याभं लिङ्गविष्णुपितामहम् ॥ ४ ॥
एवं लिङ्गोद्भवं ख्यातं वृक्षसंग्रहणं शृणु ॥ ५ ॥

इत्यंशुमद्भेदे काश्यपशिल्पे लिङ्गोद्भवलक्षणं नामा-
ष्टसप्ततितमः पटलः ।

---

॥ अथैकोनाशीतितमः पटलः ॥

---

अथ वक्ष्ये विशेषेण धृक्षसंग्रहणं परम् ।
देवानां चैव देवीनां शूलार्थं वृक्षमुच्यते ॥ १ ॥
स्त्रीपुंनपुंसकं चेति वृक्षभेदं त्रिधा भवेत् ।
सुषिरं स्निग्धभूमौ वाऽऽवर्जनीयं दृढं खत(न)म् ॥ २ ॥
अल्पगन्धसमायुक्तं फलं पुष्पं दृढं घनम् ।
शीतलोष्णं च संमिश्रं ल(म)नोहरसमान्वितम् ॥ ३ ॥
एतत्पुल्लिङ्गमाख्यातं देवानां तदिहोच्यते ।
स्निग्धे स्निग्धं च भूमौ वा त्वाजीयित्वाऽतिमार्दुलम् ॥ ४ ॥
मूलादग्रात्क्रमात्क्षीणं पुष्पं चैव प्रलम्बनम् ।
अतिमार्दवसंयुक्तमतिशीतलसंयुतम् ॥ ५ ॥
अतिस्नेहसमायुक्तं रसश्चैव समारभेत् ।
एतत्स्त्रीवृक्षमाख्यातं देवीनां शूलयोग्यकम् ॥ ६ ॥

क्षीणमूलं समाख्यातं फलपुष्पं तथैव च ।
अतिदुर्बलमाख्यातं यत्तत्षण्ड(ण्ढ)मुदाहृतम् ॥ ७ ॥
चन्दनं चम्पकं चैव रक्तचन्दनमेव च ।
चालं च खादिरं चैव सोमशीर्षदिदुक्तकम् ॥ ८ ॥
अर्धनारीशिवं चैव राजार्तं च मयूरकम् ।
पद्मकं कुटजं चैव सप्तपर्णं च सत्वकम् ॥ ९ ॥
शूलयोग्यं क्रमात्ख्यातं तेष्वन्तस्थदृढं ग्रहेत् ।
जीर्णपर्णान्तश्रित्यावाऽशिरशून्यात्रिशिखिना ॥ १० ॥
स्वयं पतितवृक्षं च स्वयमेव तु शोषितम् ।
कठकाठरसंयुक्तं व्यालपक्ष(क्षि)समाश्रितम् ॥ ११ ॥
नृपमन्दिरमाश्रित्य कर्मकारालयान्वितम् ।
अग्निदग्धाश्च वृक्षाश्च कर्मान्तरनियोजिताः ॥ १२ ॥
वर्जयेत्तु प्रयत्नेन गृहीते कर्मनाशनम् ।
तस्मात्सर्वप्रयत्नेन दोषाढ्यान्परिवर्जयेत् ॥ १३ ॥
शस्तपक्षार्क्षवारेषु शस्तवृक्षांश्च संग्रहेत् ।
आचार्यः शिल्पकर्ता च वृक्षस्थानं तु संव्रजेत् ॥ १४ ॥
वृक्षादधस्तारु(त्तृ)णादि व्यपोह्य लेपनं कुरु ।
एतन्मन्त्रं समुच्चार्य अष्टदिक्षु बलिं क्षिपेत् ॥ १५ ॥
एतद्वृक्षाश्रिता देवा दानवाश्च पिशाचकाः ।
नागा गरुडगन्धर्वाः सिद्धविद्याधराश्च ये ॥ १६ ॥
अयं बिम्बार्थवृक्षस्तु गच्छध्वं र(स्व)हिताय वै ।
इत्यु(क्त्वा) च बलिं दद्याद्दध्यजात(ध्योदनं) सपुष्पकम् ॥ १७ ॥
रक्तचन्दनसंयुक्तं गन्धतोयसमन्वितम् ।
वृक्षस्यैशानदिग्भागे पिता(कर्ता) होमं समाचरेत् ॥ १८ ॥
स्थण्डिलं सैकतं कुर्याद्धस्तमात्रप्रमाणकम् ।
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत् ॥ १९ ॥
समिदाज्यचरुभिस्तु होमं कृत्वा शिवं द्विजः ।
समिधो हृदयेनैव मूलेनाज्यं च होमयेत् ॥ २० ॥

अघोरेण चरुं हुत्वा प्रत्येकाष्टशताहुतीः ।
जयादिरभ्यातानैश्च राष्ट्रभ्यश्चैव(भृद्भिश्च) होमयेत् ॥ २१ ॥
ततस्त्वग्निं समुद्वास्य वृक्षं प्रोक्ष्य शिवाम्भसा ।
शिवात्मकेतिमन्त्रं तु जपाद्वृ(पन्वृ)क्षं स्पृशेद्बुधः ॥ २२ ॥
वृक्षस्य पूर्वभागे तु मुखं पृष्ठं तु पश्चिमे ।
दक्षिणं सव्यपार्श्वं स्याद्वामपार्श्वं तथोत्तरम् ॥ २३ ॥
ज्ञात्वैवाऽऽलक्षयित्वा तु तस्य च्छेदनमाचरेत् ।
अस्त्रमन्त्रं जपेद्युग्मं मूलं त्रिश्छेद्यलक्षयेत् ॥ २४ ॥
क्षीरतोयद्रुप(म)श्रेष्टस्रुक्स्रुवार्थे तु शोभनम् ।
अस्त्रस्रुवेण मन्त्रेण शक्तिहोमं समाचरेत् ॥ २५ ॥
वृक्षमूलं तु शेषं तु स्थपतिर्जपयेत्क्रमात् ।
पूर्वे चोत्तरदेशे तु वृक्षस्यातप(स्य पत)नं शुभम् ॥ २६ ॥
अन्यदिक्पतितं वृक्षं वर्जयेत्तु प्रयत्नतः ।
स्कन्द(न्ध)च्छेदं ततः कुर्यादब्जवन्नान्तरं कुरु ॥ २७ ॥
गव्यैर्गन्धोदकैः स्नाप्य गन्धमाल्यैरलंकृतम् ।
नववस्त्रेण संछाद्य दर्भाभिः(र्णां) सूक्ष्मरज्जुना ॥ २८ ॥
स्यन्दने शिबिकां रोप्य स्कन्धे धृत्वाऽथवा बुधौ(धः) ।
धृत्वा शशब्दं दत्त्वा कर्ममण्डपमादिशेत् ॥ २९ ॥ (?)
मण्डपमार्जनं कृत्वा गोमयालेपनं कुरु ।
गव्यैर्गन्धोदकैः प्रा(स्ना)प्यगन्धमाल्यैरलंकृतम् ॥ ३० ॥
द्विष(पिष्ट)चूर्णैरलंकृत्वा तन्मध्ये पूर्णवा बुधः ।
स्थण्डिलं कारयेद्विद्वान्शूलदीर्घसमायतम् ॥ ३१ ॥
विस्ताराधं तदर्धं वा चतुरङ्गुलमुत्तमम् ।
प्रागग्रैः शा(ग्रं स्था)मयेत्तस्मिन्स्थू(ञ्शू)लवृक्षस्य(म)धोमुखम् ३२
आशुष्के रक्षयेद्विद्वान् समं पक्षमथापि वा ।
पश्चादुक्तं तु कर्तव्यं त्वरितं तु न कारयेत् ॥ ३३ ॥

इत्यंशुमद्भेदे काश्यपशिल्पे वृक्षसंग्रहणं नामै-
कोनाशीतितमः पटलः ।

———

## ॥ अथाशीतितमः पटलः ॥

---

अथ वक्ष्ये विशेषेण शूललक्षणमुत्तमम् ।
शुद्धकायश(स)मं वेश्म दण्डदीर्घमुदाहृतम् ॥ १ ॥
मध्योदरं विशालं स्याच्चतुर्भागैकविस्तरम् ।
मूलादष्टांशहीने तु तस्याग्रस्य समं भवेत् ॥ २ ॥
नाभ्यन्तं चतुरश्रं तु हिक्कान्तं वसुकोणकम् ।
तदूर्ध्वे वृत्तमाख्यातं शेषं वृत्तं तथैव च ॥ ३ ॥
द्वात्रिंशदङ्गुलायामं वैकदण्डायतं भवेत् ।
विस्तारं सार्धषण्मात्रं सार्धसप्ताङ्गुलं तु वा ॥ ४ ॥
विस्तरार्धं घनं ख्यातं पक्षदण्डान्तमुच्यते ।
अग्रं युगाङ्गुलं ख्यातं मध्यादग्रं क्रमात्कृशम् ॥ ५ ॥
पक्षदण्डस्य मध्ये तु च्छिद्रं वाऽर्धं गुणाङ्गुलम् ।
हिक्कासूत्रोदयस्यार्धं यावद्वेद्य(द)दशाङ्गुलम् ॥ ६ ॥
पक्षदण्डोर्ध्वसीमा स्याद्व्यंशदण्डे तु योजयेत् ।
षोडशाङ्गुलमायामं कटिदण्डस्य देशिकः ॥ ७ ॥
वस्वङ्गुलं तु तत्तारं घनं वेदाङ्गुलं भवेत् ।
मध्ये युगाङ्गुलं छिद्रं तारं पञ्चाङ्गुलोदयः ॥ ८ ॥
कटिदण्डोर्ध्वसीमाद्वा द्व्यंशदण्डे तु योजयेत् ।
पक्षदण्डाद(श्र)यो विप्र कटिदण्डाश्रयोऽपि वा ॥ ९ ॥
यथावत्कांशकं कुर्यादनेन विधिना कुरु ।
एकद्वित्रिचतुष्पञ्चषट्सप्ताष्टकरं तु वा ॥ १० ॥
द्विमुखोऽपि तु करिं यन्तु संख्या वकिशिरान्वितम् । (?)
द्व्यङ्गुलं तु शिखायाममस्तं संख्योचितस्तु तम् ॥ ११ ॥
पक्षदण्डं विशलं तु हस्तसंख्या तु भाजिते ।
शिलाव्यासं तदेवांशं मालाग्रे तु क्रमात्कृशम् ॥ १२ ॥
कटिदण्डाश्रयं द्व्येकं शिखायामं गुणाङ्गुलम् ।
सार्धाङ्गुलं तु तत्तारं वृत्तं तत्समतद्घनम् ॥ १३ ॥

स्थानकं सकलं चेत्तु मा(ऊ)रुदीर्घपरिद्विज ।
अष्टाङ्गुलं समारोप्य ऊरुशूलायतं भवेत् ॥ १४ ॥
सुशीतं सकले चोरु दीर्घोदूर्ध्वोष्टमातृ(त्र)कम् ।
ऊरुशूलसुषिं कृत्वा कटिदण्डाग्रयोर्बुधः ॥ १५ ॥
शिखायां तु समायोज्य यावद्धल(ना)न्तरं यथा ।
जानुमात्रं द्विधा कृत्वा ऊरुजङ्घान(न्त)योरपि ॥ १६ ॥
आरोहयेच्छिखामानं तस्मादारोपयेद्बुधः ।
गुणाङ्गुलं शिखामानं जङ्घादीर्घोरुपर्युतम् ॥ १७ ॥
मध्यबिन्दुसमायुक्तमूर्ध्वाग्रं तु शिखान्वितम् ।
जङ्घानागैकताभ्यासं............उदाहृतम् ॥ १८ ॥
ऊर्ध्वाश्रयोजस्निग्धासाग्रहस्थ(स्त)शिखरं बुधः ।
गुणाङ्गुलं शिखामानं जानुसंधिच्छिनावधा(ध्युच्छ्रितावधि ॥१९॥
संधिभिन्नाग्रशूलं तु एक एव विधीयते ।
जङ्गादीर्घोपरिष्टात्तु तले मानं तु रोपयेत् ॥ २० ॥
ऊरुमध्ये त्रिभागैकमूरुदण्डस्य विस्तृतम् ।
तस्याग्रं तु त्रिपादं स्याज्जङ्घामूलं च तत्समम् ॥ २१ ॥
ङ्घामूलत्रिभागैकं हीनं जङ्घाग्रविस्तृतम् ।
क्रियापादतलायामं कृत्वा भागं च वाऽऽयतम् ॥ २२ ॥
तलाग्रविस्तृतं द्वित्रिद्व्यशं (तु) विस्तृतान्वितम् ।
एतत्पादतलव्यास उद्ध्यायतापरोस्थितम् ॥ २३ ॥
कर्तव्यं सुषिरं तत्तु जङ्घाग्रास्थू(स्तू)पिकायुतम् ।
योज्य स्निग्धं दृढं कृत्वा यद्विशूलमथोच्यते ॥ २४ ॥
बाहुमूलविशालं तु गुणाङ्गुलमुदाहृतम् ।
अग्रद्वयाङ्गुलं व्यासं प्रोष्ठमूलं च तत्समम् ॥ २५ ॥
सार्धद्वयाङ्गुलं वाऽथ प्रोष्ठमूलविशालकम् ।
तन्मूलविस्तृतार्थ(र्धं) स्यात्प्रकोष्ठाग्रविशालकम् ॥ २६ ॥
बाहुप्रकोष्ठयोश्चैव कूर्परौ जानुवद्भवेत् ।
द्व्यङ्गुलं तु शिखामानं योजयेत्तद्दृढं यथा ॥ २७ ॥
पार्श्वयोर्वर्धनं चैव चांसदण्डे तु योजयेत् ।
अतिपक्षान्तरं दीर्घं तदन्व्यासं तु गुणाङ्गुलम् ॥ २८ ॥

वंशदण्डसमानञ्च ऊर्ध्वकायस्तवान्वितम् ।
अग्रे तु पक्षदण्डे तु मूलदण्डे तु योजयेत् ॥ २९ ॥
स्वाग्रमूले तदा तस्य पार्श्ववंशे द्वयोपरि ।
हस्तपादतलाग्रेऽत्र ताम्रपात्रेण योजयेत् ॥ ३० ॥
आर्चयेद्रत्नबिम्बे वा शूलश्चैवावदं कुरु ।
देवानां शूलमेवं स्यादम्बराणां तु वक्ष्यते ॥ ३१ ॥
मध्योदरं त्रिभाज्यैव एकांशं वंशविस्तरम् ।
अष्टांशं हीनमग्रं स्याद्विशालं तस्य सूत्रकम् ॥ ३२ ॥
बाहुपर्यन्तविस्तारं वा तन्य(स्या)र्धमिवार्जितम् ।
पक्षदण्डायतं शेषं तस्यार्धं विस्तृतं भवेत् ॥ ३३ ॥
तदर्धं बाहुदं ख्यातं कटिदण्डमथोच्यते ।
कटितारेण भूतांशं युगांशेनान्तदीर्घकम् ॥ ३४ ॥
शेषं प्रागिवकर्तव्यं कश्चद्वेषमथ शृणु ।
आसने वंशदण्डं तु वस्वङ्गुलं तु रेखयेत् ॥ ३५ ॥
युगांशं पृष्ठमानं तु शेषं कर्तशुपोशनम् ।
जङ्घादण्डान्त वि(ष)ण्मात्रं देवयेत्स्थानके बुधः ॥ ३६ ॥
गर्भाग्रं तु मवेधं तु ततोऽधस्थं तु तद्भवेत् ।
शूलमेवं समाख्यातमुपशूलमथोच्यते ॥ ३७ ॥
भित्तिमध्यं समारभ्य पक्षदण्डकरान्तकम् ।
उपशूलायतं प्रोक्तमष्टाङ्गुलं नतं भवेत् ॥ ३८ ॥
वेदाङ्गुलं तु तन्नीत्रं शूलयोग्यं समे बुधः ।
शूलव्याससमं वध्याच्छिद्रं तद्द्विंशदान्वितम् ॥ ३९ ॥
भित्तिमध्यं तु मूलं स्यान्मूलं बध्वा दृढं बुधः ।
पक्षदण्डं कटीदण्डं धृत्वा शूलाख्यशूलकम् ॥ ४० ॥
छिद्रे दृढतरं बद्ध्वा तत्परे कीलबन्धितम् ।
उपशूलविधानं च पक्षदण्डपुरं समम् ॥ ४१ ॥
उपशूलशिखायां तु वंशाग्रे सुषिरं कुरु ।
लोहजं दारुजं वाऽथ कीलकं योजयेद्दृढम् ॥ ४२ ॥

बिम्बार्थं शूलमाख्यातं तस्मादुक्तं समाचरेत् ।
शूललक्षणमाख्यातं शूलस्थापनमुच्यते ॥ ४३ ॥

इत्यंशुमद्भेदे काश्यपशिल्पे शूललक्षणं नामा-
शीतितमः पटलः ।

---

॥ अथैकाशीतितमः पटलः ॥

---

अथ वक्ष्ये विशेषेण शूलस्थापनमुत्तमम् ।
कर्षणा[द्युदि]ते मासे रि(ऋ)क्षे वारे सुलग्नके ॥ १ ॥
निश्चित्य स्थापनं तस्य पुरः कृत्वाऽङ्कुरार्पणम् ।
प्रासादस्याग्रतो देशे मण्डपं चतुरश्रकम् ॥ २ ॥
पञ्चसप्तकरं वाऽथ पदत्रयसमायुतम् ।
षोडशस्तम्भ[सं]युक्तं द्वादशस्तम्भसंयुतम् ॥ ३ ॥
तलमष्टाङ्गुलोत्सेधं प(भि)त्तिव्यासवितुङ्गकम् ।
यथालाभं परीणाहं वामकं नीव्रणं दृढम् ॥ ४ ॥
वलयं वंशनासाढ्यं नालिकेरफलादिभिः ।
शा(स्था)पयेत्तु विधानेन मुक्ताग्रं दर्भमालिका ॥ ५ ॥
तरङ्गवेष्टनोपेतं वरतोरणसंयुतम् ।
चतुर्द्वारसमायुक्तं स्तम्भवेष्टनसंयुतम् ॥ ६ ॥
चतुर्द्वारं विनाऽन्यत्र निश्छिद्रं जालकं तु वा ।
मण्डपस्य त्रिभागैकं वेदिकोदयमुच्यते ॥ ७ ॥
गुणाङ्गुलं विशालोश्च(च्चं) मध्यायोद्धतपेटिका ।
दर्पणोदरसंकाशं कृत्वा रूपं दृढं लिखेत् ॥ ८ ॥
परितश्चाग्निकुण्डानि अनेन विधिना कुरु ।
चतुरश्रं धनुर्वृत्तं पद्मपूर्वादिदिक्षु च ॥ ९ ॥
च(श)क्रशंकरयोर्मध्ये वृत्तकुण्डं प्रकल्पयेत् ।
कुण्डमेवं समाख्यातं केवलानां विशेषतः ॥ १० ॥
गौरीसहितबिम्बं चेत्तत्कोणेष्वर्धपत्रवत् ।
कुण्डानि कल्पयेच्छेषं प्रागिवैव प्रकल्पयेत् ॥ ११ ॥

कुण्डलक्षणवत्कुर्यात्सर्वकुण्डानि देशिकः ।
गोमयालेपनं कृत्वा पिष्टचूर्णैरलंकृतम् ॥ १२ ॥
ब्राह्मणान्भोजयेत्तस्मिन्पुण्याहं वाचयेत्ततः ।
महेन्द्रस्तु पदं यावद्धोमं कृत्वा विधानतः ॥ १३ ॥
वेदिकां (चा)श्वाग्निकुण्डं च पर्यग्निकरणं कुरु ।
निर्दिष्टाद्दिवसात्पूर्वे रात्रौ (त)दधिवासनम् ॥ १४ ॥
स्थण्डिलं वेदिकायां तु अष्टद्रो(णै)श्च शालिभिः ।
कर्तव्यं नालिकेरस्य साष्टपत्रं सकीर्ण(कर्णि)कम् ॥ १५ ॥
तण्डुलैस्तिलदर्भैश्च रा(ला)जपुष्पैरलंकृतम् ।
शयनं चाहतेनैव वस्त्रेणैव प्रकल्पयेत् ॥ १६ ॥
धूपदीपैः समायुक्तं पुष्पगन्धैः समर्चयेत् ।
मण्डपं चो(स्यो)त्तरे पार्श्वे स्नानशुभ्रं प्रकल्पयेत् ॥ १७ ॥
तन्मध्ये दारुपीठं तु न्यस्या(स्येत्त)स्योपरि द्विजः ।
प्राङ्मुखं स्थापयेच्छूलं पञ्चगव्याभिषेचितम् ॥ १८ ॥
शुचि हव्येति मन्त्रेण कृत्वा गन्धोदकै(र्है)दः ।
स्थापयेद्देवं देवीं च गन्धपुष्पैः समर्चयेत् ॥ १९ ॥
कौतुकं बन्धयेद्देवांस्ततो दक्षिणहस्तयोः ।
स्वर्णकार्पाससूत्रैर्वा कवचैरेव बन्धयेत् ॥ २० ॥
लम्बकूर्चसमायुक्तं वाद्यध्वनिसमायुतम् ।
शयनं शा(स्था)पयेच्छूलं प्राक्छिरश्चोर्ध्ववक्त्रकम् ॥ २१ ॥
तस्य वामे ह्युमादेवी शूलं वै शाययेत्सुधीः ।
तयोः शिरोऽग्निके देशे स्थापयेत्तु पटद्वयम् ॥ २२ ॥
सूत्रं सर्वाभिधानं च सकूर्चं वस्त्रवेष्टनम् ।
द्रोणकुम्भाम्बुसंपूर्णं शिवकुम्भं तदुच्यते ॥ २३ ॥
तस्यार्धे तोयसंपूर्णं प्राग्वत्सूत्रादिभिर्युतम् ।
गौरीबीजसमायुक्तं गोत्र(गौरी)कुम्भमिदं परम् ॥ २४ ॥
तन्मूलमध्यमे कुम्भं न्यस्य कुम्भा(गन्धा)दिभिर्यजेत् ।
गौरीकुम्भे तु तस्यास्तु मन्त्रं न्यस्य विशेषतः ॥ २५ ॥
परितोऽष्टघटान्न्यस्य सूत्राद्यैश्च समन्वितान् ।
विद्येशान्मूलमन्त्रैश्च स्थाप्य गन्धादिभिर्यजेत् ॥ २६ ॥

वास्तुहोमादिकुण्डे तु अग्निं संस्थाप्य देशिकः ।
अग्न्याधानादिकं सर्वमग्निकार्योक्तमाचरेत् ॥ २७ ॥
अग्न्यर्थं पूर्वकुण्डे तु वह्निमाग्नेयगोचरे ।
याम्ये चौदुम्बरं ख्यातं खादिरं नै(र्ऋ)तिं द्विज ॥ २८ ॥
बिम्बं पश्चिमभागे तु मयूरं वायुगोचरे ।
पटं वै सौम्यकुण्डे तु खदिरं वास्तु देशिकः ॥ २९ ॥
प्रधाने ब्रह्मवृक्षः स्यात्समिद्वौरि(द्गौरी)समन्वितम् ।
विद्याकुण्डेषु कुण्डानि गौरीहीनानि कारयेत् ॥ ३० ॥
समिदो हृदयेनैव पुरुषेण घृताऽऽहुतीः ।
अघोरेण चरुं हुत्वा दा(त्वा)द्यां वामे तु होमयेत् ॥ ३१ ॥
चरुस्मिन्शाण(मीशान)मन्त्रेण तिलं वै शिरसाहुतिः ।
सर्षपं कवचेनैव शिखामङ्गलमुच्यते ॥ ३२ ॥
गलमस्त्रेण मन्त्रेण प्रत्यहं जुहुयाच्छतम् ।
उच्यते व्याहृतिं हुत्वा देवदेव्युचितं समम् ॥ ३३ ॥
जयादिभि(द्यै)रभ्यातानैश्च राष्ट्रभृच्चैव(द्भिश्च) होमयेत् ।
दिशास्वध्यायतं वेदांस्तोत्रैस्तु[हि]शिखामुखैः ॥ ३४ ॥
अध्यानं कृततोदग्रमुपांशुं होममाचरेत् ।
देवदेवीशयोर्मूलमन्त्रैरष्टादशाऽऽहुतीः ॥ ३५ ॥
घृताहुतीस्तु कर्तव्यं भस्मस्नानमतः परम् ।
शुक्लवस्त्रोत्तरीयं च शुक्लयज्ञोपवीतधृत् ॥ ३६ ॥
शुक्लमालानुलेपाद्यैस्त्रिषु पञ्चाङ्गभूषणैः ।
पवित्रपाणिनोपेतः सकलीकृतविग्रहः ॥ ३७ ॥
आचार्यः सुप्रसन्नास्तुः (स्यः) शिवद्विजकुलोत्तमः ।
प्रविश्य गर्भगेहं तु एकाशीतिपदं कुरु ॥ ३८ ॥
मण्डूकाख्यपदं वाऽथ सप्तसप्तांश एव वा ।
गर्भगेहे तु कर्तव्यं ज्ञात्वा ब्रह्मोदयं परम् ॥ ३९ ॥
स्थानकं देविकांशे तु आसनं मानुषे पदे ।
गर्भगेहपरे भागे स्थापयेद्देशिकोत्तमः ॥ ४० ॥
आसनं भद्रपीठेन स्थानकं वेदिकोपरि ।
प्रागुक्तविधिना पीठन्यासायागो(मो)द्याद्यः ॥ ४१ ॥

कर्तव्यं सुन्दरं तस्मिन्नाधाराख्याशिलां न्यसेत् ।
पीठग्राह्यत्रिपादं तु आसा(धा)राख्यशिलातलम् ॥ ४२ ॥
समग्रमायतं वाऽपि तदर्धं तद्धनं भवेत् ।
स्थानकं सकलं चेत्तु पादाधस्ताद्द्विजोत्तम ॥ ४३ ॥
आधाराख्यशिलायां तु रत्नाङ्गुल्यं प्रकल्पयेत् ।
निम्नं षडङ्गुलं ख्यातं कर्तव्यं सगुणाङ्गुलम् ॥ ४४ ॥
मूले तु नवरत्नं वा होमपात्रं विनिक्षिपेत् ।
शूलपादतलाधस्तात् षण्मात्रं वाऽऽयतान्वितम् ॥ ४५ ॥
प्रागेव कल्पयेद्धीमान्स्थापनार्थं बलान्वितम् ।
प्रवेशेग(विशेद्र)र्भगेहे(हं) तु मूलमन्त्रं समुच्चरन् ॥ ४६ ॥
स्थापयेत्तु पदे शूलं मूलमन्त्रं दृढं तथा ।
अष्टबन्धं दृढं कृत्वा सुधया च विशेषतः ॥ ४७ ॥
तस्य वामे तथा स्थाप्यं गौरीशूलं विशेषतः ।
आधाराख्यशिलायां च गर्भभाजनमाग(य)तम् ॥ ४८ ॥
पञ्चषट्सप्तमात्रं वा गर्तव्यासं तथा तस(सम)म् ।
गर्भन्यासं तु तत्रैव गर्भभाजनसंयुतम् ॥ ४९ ॥
प्रागुक्तविधिना सम्यक्गन्धपुष्पादिभिर्यजेत् ।
स्थापयेत्पूर्ववच्छूलं मूलं वै द(ग)र्भभाजनम् ॥ ५० ॥
अथाशेषं तु यत्कर्म शिल्पिभिस्तु विशेषतः ।
कर्तव्यं लक्षणोपेतं स्थपतिः शिल्पिरुच्यते ॥ ५१ ॥
स्थपतिः शिल्पकर्मा च योग्या त्व(ग्यस्त्व)न्यस्तु कारयेत् ।
कृतं चेदन्यथा विप्र कर्तुरिच्छा भविष्यति ॥ ५२ ॥
आचार्यः पूजयेत्तत्र पञ्चनिष्कं हिरण्मयम् ।
शूलस्थापनमाख्यातं रज्जुबन्धमथ शृणु ॥ ५३ ॥

इत्यंशुमद्भेदे काश्यपशिल्पे शूलपाणिलक्षणं नामै-
काशीतितमः पटलः ।

---

॥ अथ द्व्यशीतितमः पटलः ॥

---

अथ वक्ष्ये विशेषेण रज्जुबन्धं सविस्तरम् ।
सर्वशूलस्य बन्धस्तु ताम्रपत्रैः सुवेष्टयेत् ॥ १ ॥
शूलेऽष्टबन्धमालिप्य रज्जुबन्धं ततः कुरु ।
श्रीवेष्टकं दुरुष्कं च गुग्गुलं च गुडं तथा ॥ २ ॥
सर्जकं गैरिकं चैव घृततैलेऽष्टबन्धनम् ।
श्रीवेष्टकं चतुर्भागं कुन्दुरुष्कं गुणांशकम् ॥ ३ ॥
गुग्गुलं पञ्चभागं स्यादेकांशं गुलमुच्यते ।
सर्जकः स तु वस्वंशं गैरिकं तु गुणाङ्गुलम् ॥ ४ ॥
षडेते सूक्ष्मचूर्णं तु कृत्वाऽऽज्यतैलमिश्रताः ।
मृत्पात्रे तु विनिक्षिप्य पचेत्क्षौद्रादिकं वरम् ॥ ५ ॥
तथैव शूलमालिप्य रज्जुबन्धं ततः कुरु ।
रज्जुबन्धस्तु नाहे तु मध्यं स्यादूर्ध्वगं त्रिधा ॥ ६ ॥
सुषुम्ना मध्यमा ख्याता पिङ्गला तस्य दक्षिणा ।
इडा वै तस्य वामस्था प्रधानेनाध्वयास्तिमे(नोर्ध्वगास्त्विमाः)॥७॥
द्व्यङ्गुलं तु परीणाहं युक्तास्ता वै त्रिवर्तिकाः ।
तेषां नाडीत्रयाणां तु मूलमेद्रावसानकम् ॥ ८ ॥
तेनास्थिमूलवद्भिन्ना राडीयो(नाड्यो)ऽष्टादशस्तथा ।
विमला घोषिणी प्रायसचाहहसितेजसा ॥ ९ ॥ (?)
वायाविर्गतती चैव मर्दिनी घोषिणी तथा ।
रसवर्ती मृदङ्गी च स्तिसनी च तथैव च ॥ १० ॥
शब्दस्पर्शादिपूर्णा च सुसिंही वारिधारिणी ।
वाहिनीति समाख्याता त्रिषट्संख्या विधानतः ॥ ११ ॥
प्रत्येकं त्रियवव्यासा त्रित्रिवर्तिर्द्विवर्तिका ।
तेष्वादौ रसनाडी तु सर्वपादोरुमूलकम् ॥ १२ ॥
ऊरुमूलैः क्रमात्त्वया परितो नलिकान्तकम् ।
लम्बितास्ते समाख्याताः सा वै पिङ्गलमूलकम् ॥ १३ ॥
शब्दादीनि [तु] षट्संख्या इडामूले समुद्भवा ।
एषां वै रसनाडीनां वामपादे तु सन्त्यवत् ॥ १४ ॥
नलकाग्रैवमावृत्त्या षण्णामग्रैकवर्तिता ।
सुषुम्ना मूलगाः शेषा वंशपार्श्वाङ्गरोहिताः ॥ १५ ॥

पक्षदण्डोपरिष्टं तु(ष्टात्तु) तिर्यग्बाहुगतास्त्विमे ।
गगनी मर्दनी चैव रोहिणी दक्षिणे करे ॥ १६ ॥
रसावादि(वर्ती)मृदङ्गी च सृक्सिना(सिंसनी) वामबाहुका ।
बाहुमूले समावृत्य त्रिष्वग्रं चैव(क)वद्भवेत् ॥ १७ ॥
तस्याग्रे द(अ)ष्टशाखासु दक्षिणे दक्षिणे तथा ।
बाहुमूलं तथान्तं तु नाड्योऽष्टौ प्रसारिते ॥ १८ ॥
तेषामग्रैकविभाणिबन्धैकप्रणवावृतम् ।
एवं वामे तु दृष्टं स्याद्धस्तं प्रणवमाचरेत् ॥ १९ ॥
एवं हि प्रतिमानं तु नाडीनामष्टविंशतिः ।
प्रधाना नाड्यस्त्वेवं कल्पयेत्तन्त्रवित्तमः ॥ २० ॥
तेषु भिन्नास्तथा विम अष्टाष्टौ नाड्यस्तथा ।
तस्मात्तदेकनं नाडी सर्वाङ्गं तु समावृतम् ॥ २१ ॥
चतुःसप्तसहस्राणि नाड्यः परिकीर्तिताः ।
नाडिहस्तावृताः शूला जीर्णकः शूलपात्रवत् ॥ २२ ॥
नालिकेलफलैः पक्वैः घृतकल्पलयान्वितम् ।
चर्मासारं गृहीत्वा तु सारादन्यास्रवाहता ॥ २३ ॥
नाड्यः स्वा हि संकल्प्य पश्चादावृतनाडिकाः ।
षड्यवं तु परीणाहं रज्जुमापातयेद्दृढम् ॥ २४ ॥
पश्चात्तु रज्जुरज्जुभ्यां बन्धयेद्दक्षिणावृतम् ।
हृत्पद्मसाष्टपत्रं तु रज्जुना बन्धयेद्बुधः ॥ २५ ॥
तस्य नालं तु नाभ्यन्तं सुषुम्णा(म्ना) सह साधितम् ।
जीवस्थानं तु तत्पद्ममित्युक्तं हि मयाऽधुना ॥ २६ ॥
मूलमन्त्रमनुस्मृत्य रज्जुबन्धं ततः कुरु ।
रज्जुबन्धमिति ख्यातं मृत्संस्कारमतः परम् ॥ २७ ॥

इत्यंशुमद्भेदे काश्यपशिल्पे रज्जुबन्धलक्षणं
नाम द्व्यशीतितमः पटलः ।

---

॥ अथ त्र्यशीतितमः पटलः ॥

---

मृत्संस्कारमहं वक्ष्ये संक्षेप्याशृ(प्य शृ)णु सुव्रत ।
जाङ्गलं जानुरूपं च संमिश्रं मृत्त्रिधा भवेत् ॥ १ ॥

अंशत्वेन खनेत्पार्के सुग्रीडिजाङ्गलं भवेत् ।
तनुवालुकसंयुक्तं तनुकेशात्खनक्षमम् ॥ २ ॥
त्रिहस्तं मनोरमं सन्तु(न्तु) दृष्टं वत्सानुरूपकम् ।
तयोर्मिश्रविमा(मिवा)कारं मिश्रलं तदुदाहृतम् ॥ ३ ॥
तेषु शेष्या जवोपेता शुद्धभूमौ मनोरमे ।
नदीतीरे तटाके वा श्वेतासृक्पीतकृष्ण वा(ला) ॥ ४ ॥
पङ्कं संग्राह्य पात्रेषु जलमास्रावयेत्तु वा ।
पात्रस्थं शोषयेत्पङ्कं यावदल्पदृढान्वितम् ॥ ५ ॥
तावद्रक्ष्या च बालाक्षिताम्भसं विप्र मर्दयेत् ।
ईषद्द्रवसमायुक्तं पिण्डं कृत्वा तु तन्मृदा ॥ ६ ॥
पिण्डहस्ते नले रेखा दृशे पिष्ठं तथा कुरु ।
यवताराष्टकेणैताः कल्प्यमानं तलेन तु ॥ ७ ॥
रुद्राङ्गुलीपरीणाहं प्रस्तं(स्थं) मुक्तमुदाहृतम् ।
सिकतं च शिलापूर्णं सदृशं कल्पयेद्बुधः ॥ ८ ॥
मृत्तं वैकं तु(त)देकांशं योजयेत्तु मुदा स हि ।
फलं भोगिसमं दद्याद्दशाहे वाऽष्टसप्तके ॥ ९ ॥
यवगोत्रममाक्षं च तत्त्वसीचूर्णसंयुतम् ।
मृदेऽष्टांशं समायोज्यं नालिकेलफलोदकैः ॥ १० ॥
पात्रे वा मर्दयेद्भस्म देशहातृकमे ततः ।
श्र(श्री)वेष्टं गुग्गुलं चैव कुन्दुरुष्कं तथैव च ॥ ११ ॥
तथा सर्जरसाचूर्णं मृत्कालांशं शिवांशकम् ।
पात्रे मृदा समायोज्यं दधिना मर्दयेत्सुधीः ॥ १२ ॥
चूर्णी च पिप्पली चैव मरीची रसनी तथा ।
समचूर्णं तु कर्तव्यं उद्देशांशैः सुसंयुतम् ॥ १३ ॥
मधुक्षीरघृतेनैव मृदं पात्रेण मर्दयेत् ।
कपित्थबिल्वनिर्यासचूर्णौ द्वौ समतां कुरु ॥ १४ ॥
मृदे पञ्चदशांशे वा तैलचूर्णसमायुतम् ।
मर्दयेत्क्रमसाम्यार्क(र्थे) कुष्ठगैरिकतालकम् ॥ १५ ॥

चन्दनागरुकर्पूरगोशु गोरोचनं समम् ।
ग्राह्यं चूर्णं तु कर्तव्यं मुक्ता(क्तां)शांशसमन्वितम् ॥ १६ ॥
असतीस्नेहसंयुक्तं मर्दयेद्देशिकोत्तमः ।
सुपर्णराजिताचूर्णं चापल्ये गुलिकावहे ॥ १७ ॥
दिग्दिगष्टादि सस्यादि सागरे च हलस्तले ।
गजदन्ते वृषशृङ्गे गोमृगैश्च विशेषतः ॥ १८ ॥
यथालाभं तु कर्तव्यं नानागन्धसमन्वितम् ।
कपित्थं चैव निर्यासं मधु वा मर्दयेद्बुधः ॥ १९ ॥
पञ्चरात्रमितीकृत्य नारिकेलफलं तथा ।
त्वक्सारं तु परीगृह्य एकसारं द्वयाङ्गुलम् ॥ २० ॥
सार्धद्व्याङ्गुलं वाऽथ मानेन च्छेदयेद्बुधः ।
मृच्चतुर्थसमायुक्तं मध्यमे वा।ंत(स)मारभेत् ॥ २१ ॥
राज्यं धेनुमृदं लिप्य ततोऽपि ऋजुवेष्टनम् ।
तदु रज्जुं नरं विप्र एकद्वित्र्यङ्गुलं तु वा ॥ २२ ॥
ततो वै मृत्समालिप्य यावच्छोषणकं द्विज ।
तावन्निरीक्ष्य कर्तव्यं मृल्लेपं तु शनैः शनैः ॥ २३ ॥
शूलबाह्यागतव्यासचतुर्भङ्गविभाजिते ।
एकांशावधिकं लिप्य अनुरूपमुदाहृतम् ॥ २४ ॥
द्व्यंशाक्शतमिश्रं स्याद्भागेन त्वनलावधि ।
तत्तद्देशमृदेनैव तत्तद्योग्यं समालिपेत् ॥ २५ ॥
शेषं कालेन संपूर्य वेदं शेषं सवल्कलम् ।
शेषं कार्पासतन्त्वादि युक्तं कल्के तु कल्पयेत् ॥ २६ ॥
मृत्संस्कारमिदं ख्यातं कल्कसंस्कारमुच्यते ॥ २७ ॥

इत्यंशुमद्भेदे काश्यपशिल्पे मृत्सकारलक्षणं नाम
त्र्यशीतितमः पटलः ।

---

॥ अथ चतुरशीतितमः पटलः ॥

---

अथ कल्कविधानं तु वक्ष्ये संक्षेपतः क्रमात् ।
नद्यां वाऽपि तटाके वा दीर्घिकायामथापि वा ॥ १ ॥
सस्यक्षेत्रेऽथवा विप्र प्राणिरूपे जले भवेत् ।
सुदृढा शुद्धजलजा स्थूलवालुकमुद्रिता ॥ २ ॥
संग्राह्या शर्करा ह्येषा तस्याः प्रक्षालनं कुरु ।
शर्कराशोषणं कृत्वा सूक्ष्मचूर्णं तु तत्कुरु ॥ ३ ॥
तिलोदकसमं पिण्डं कृत्वा तच्छोषयेत्क्रमात् ।
अबन्धनिर्यासजलं त्रिविधं प्रोक्ष्यते द्विज ॥ ४ ॥
पञ्चगुणं तु निर्यासं सपद्वेतु षड्गुणम् ।
स्वश्रुतं स्वाचलं चैव सैकतं च क्रमोदितम् ॥ ५ ॥
स्वश्च सेकजले पिण्डं वेष्टयेत्तु यथाक्रमात् ।
कार्पासतन्तवश्चापि मृदं कृत्वा सुपोषयेत् ॥ ६ ॥
त्रियवं कल्कभित्ते तु कदलीभिस्तदर्थवत् ।
एतत्कल्कं यथायोग्यं कल्य एव हि निर्यसा ॥ ७ ॥
त्रिगुणं मध्यमं चात्र कन्यसं तु चतुर्गुणम् ।
बन्धबद्धं जलं ह्येवं त्रिविधं परिपठ्यते ॥ ८ ॥
तेष्वादौ गुडजलेन मर्दयेत्तु पुनः पुनः ।
क्रमेण लेपयेत्कल्कं व्यवक्रिया यवं घनम् ॥ ९ ॥
शनैः शनैर्लेपनं कृत्वा भिन्नच्छिद्रविवर्जितम् ।
यममासं त्रिसमासं वा मासं वा शोषयेत्पुनः ॥ १० ॥
कुश्चमन्याम्रको विप्र पेषितो पोषयेत्क्रमात् ।
ततः स्वच्छं जलेकं च प्रमाणं तं तु लेपयेत् ॥ ११ ॥
बाहुकूर्चप्रमाणं तु शोध्यमानसमं नयेत् ।
अङ्गोपाङ्गं च प्रत्यङ्गं कल्पयेल्लक्षणान्वितम् ॥ १२ ॥
करचरणोदयादग्नि अङ्गमित्यभिधीयते ।
उपाङ्गं भूषणं ख्यातं प्रत्यङ्गं चाह नार्हणा ॥ १३ ॥
कपित्थनिर्यासरसं सार्धत्रिगुणांशकम् ।
वनच्छादं चतुर्भागं कल्कमालेपयेत्ततः ॥ १४ ॥
तत्तत्कल्कं तु षष्ठ्यंशाह्लादपरस्ततम् ।
योस्स(यः स)न्ततो च(तश्च) कूर्चेन प्रोक्ष्यं तु पोषयेत् ॥ १५ ॥

मस्तानान्वितमिन्द्रं यवस्थयेलक्षण ... .... ।
.... ... ... ... ... ॥ १६ ॥
इत्येते कल्कसंस्काराः प्रोच्यते(क्ताश्च) सकलस्य तु ॥ १७ ॥

इत्यंशुमद्भेदे काश्यपशिल्पे कल्कसंस्कारलक्षणं नाम
चतुरशीतितमः पटलः ।

---

॥ अथ पञ्चाशीतितमः पटलः ॥

---

अथ वक्ष्ये विशेषेण वर्णसंस्कारलक्षणम् ।
शिवात्परमसद्भावं द्रव्यकाच्छशिसंभवम् ॥ १ ॥
शिवाच्छक्तिः समुत्पन्ना तस्या नादः समुत्थितः ।
तस्मात्सर्वं समुत्पन्नं तस्मादनिलसंभवः ॥ २ ॥
अनिलादापः संभूतं तस्माद्वै क्षिति संभवम् ।
श्वेतं रक्तं तथा पीतं कृष्णं चेतिचतुर्विधम् ॥ ३ ॥
जले सच्छ्वेतमग्नौ च रक्तं निभवेद्भवम् । (?)
भुवने पीतवर्णश्च नीले कृष्णस(स्य) संभवः ।
विष्णुर्महेश्वरो गौरी रुद्रो वर्णाधिपाः क्रमात् ।
विप्रक्षत्रियविट्शूद्राः सितवर्णादयः क्रमात् ॥ ५ ॥
श्वेतं रक्तं च पीतं च कृष्णं चैव चतुर्विधम् ।
श्वेतं चैव तु शुक्लं च धवलं च विनात्तकम् ॥ ६ ॥
मुक्ताभं चेषुवर्णाभं श्वेतवर्णमिदं सितम् ।
शङ्खवर्णसमं शुक्लं प(व)र्णमित्युतमा(त्तमं)मया(तम्) ॥ ७ ॥
रजताभं च गोक्षीरसदृशं धवलं भवेत् ।
तारकासमवर्णं तु अतारकमुदाग्रतः ॥ ८ ॥
अरुणं रक्तशोणं च अग्निएदं(रेवं) चतुर्विधम् ।
अरुणं शोकनाभं तु पद्मपुष्पाभरत्नकम् ॥ ९ ॥
शोणकं शुकपुष्पाभं राक्षसानां तु पाटलम् ।
स्वर्णपिङ्गं च पीतं च हरितालं चतुर्विधम् ॥ १० ॥
स्वर्णवर्णवपुं पुण्ड्रं विसङ्गजनिसारवत् ।
हरितालं च पीतस्य हरितं रज्जुमत्त्रवत् ॥ ११ ॥

नीलं श्यामं च कालं च कृष्णं चैव चतुर्विधम् ।
मेघवर्णसमं नीलं श्यामं वै नलया समम् ॥ १२ ॥
शिखिवर्णसमं कालं कृष्णं च भृगुपत्रवत् ।
एवं षोडशभेदं तु वर्णमेवं स्वजन्त्रकम् ॥ १३ ॥
धरणीजसमुच्छिष्टं रक्तं नासाग्रसंभवम् ।
अथवा जातिलिङ्गं तु रक्तभासं द्विधा स्मृतम् ॥ १४ ॥
गौदावर्या तु संस्कृतं हलालवमुदाहृतम् ।
अतसीपुष्पसंकाशं रजायत्ताश्वमुच्यते ॥ १५ ॥
श्यामपाषाणसारं तु श्याममित्यभिधीयते ।
दिवेसत्तरजोत्पू(दीपोत्पन्नरजोव)र्णं कृष्णवर्णमुदाहृतम् ॥ १६ ॥
एवमादिकलावर्णास्तस्मिंस्तस्मिन्ननेकधा ।
भिच्छेत लक्षसारं च दिवोद्भूतरजस्तथा ॥ १७ ॥
ऊरुं चापिमिनीलाघर्यां तुरन्यांभिधीयते ।
एवं स्वतः प्रयाणं तु वर्णविम्बानकामतम् ॥ १८ ॥

---

इति काश्यपे वर्णसंस्कारलक्षणम् ।

---

यंलाकामाहकं वर्णा वक्ष्ये संक्षेपतः क्रमात् ।
पीताभ्यासं तु पीतं स्यात्तादृशं पूर्णवत्कृतम् ॥ १९ ॥
नारिकेलोदकैर्मिश्रं दहेरक्तनिभं भवेत् ।
तत्सुधाकर्मरक्तस्य शवे दीर्घसिता भवेत् ॥ २० ॥
राजावर्तं च श्यामं च पाषाणौ द्वौ च पूजितौ ।
जनासनं वशरताः स्युः सुधाकर्मसु सुव्रत ॥ २१ ॥
अथःसंस्कारवर्णं तु वक्ष्यते द्विजसत्तम ।
सितं रक्तं समं मिश्रं गौरं च विरुदाहृतम् ॥ २२ ॥
सितं पीनं समं मिश्रं यत्तत्पूरकं भवेत् ।
सितवत्कं कृष्णसंमिश्रं समावर्णनिभं भवेत् ॥ २३ ॥
श्वेतं कृष्णं च पीतं च समभागं तु मिश्रितम् ।
धारं च विरिदं ख्यातं वर्णकर्मसु चो(त्कट)कृतम् ॥ २४ ॥

श्वेतं रक्तं च पीतं च संमिश्रकमुदाहृतम् ।
रक्तं पीतं समं मिश्रं बकुलस्य फलाकृति ॥ २५ ॥
ज्वलनच्छविरि(नाभमि)दं ख्यातमग्निवर्णमिदं परम् ।
पीतस्य द्विगुणं रक्तं मिश्रं तत्त्वतिरक्तकम् ॥ २६ ॥
उभयात्सममन्येन द्व्यर्णमित्युच्यते तु वामया ।
रक्तस्य द्विगुणं विषमिश्रितं गुल()वर्णकम् ॥ २७ ॥
पीतस्य च तदर्धं तु मिश्रितं कपिलं भवेत् ।
सितवेदांशरक्ताढ्यं खर्परस्य समं भवेत् ॥ २८ ॥
तदेवानिलमाधिक्यधान्याङ्कुरमुदाहृतम् ।
श्यामस्यारितलाढ्यं च कुङ्कुष्टा(मा)रितलार्धकम् ॥ २९ ॥
मिश्रितं स्यात्सस्यमस्याः कृष्णालाक्षं च संमितम् ।
जम्बूफलसमं त्वेतद्वर्णमित्युच्यतेऽथवा ॥ ३० ॥
जातीफलं समं लाक्षासारं लोहितमुच्यते ।
कृष्णं नीलं समं मिश्रं केशवर्णमुदाहृतम् ॥ ३१ ॥
सस्यश्यामं च रक्तं च मिश्रं मञ्जिष्ठवर्णकम् ।
कृष्णं पीतं समं मिश्रं मधुवर्णमुदाहृतम् ॥ ३२ ॥
कृष्णस्य द्विगुणं पीतं मानुषं वर्णमुच्यते ।
मानुषं रक्तमाधिक्यं हरितं ममताभशाम् ॥ ३३ ॥
निहोपेतदातृवर्णमुदाहृतम् .... .... .... ।
तेषु यत्सस्यमल्पेन बाहुमानसमन्वितम् ॥ ३४ ॥
बाहुसामेति तत्ख्यातं द्रव्याल्पादिच मानितम् ।
अल्पसारमिदं ख्यातं सलेपाकल्पितं विदुः ॥ ३५ ॥
वर्णानामानुकूलस्य सममेव समाश्रितम् ॥ ३६ ॥

इत्यंशुमद्भेदे काश्यपशिल्पे वर्णसंस्कारलक्षणं
नाम पञ्चाशीतितमः पटलः ।

---

॥ अथ षडशीतितमः पटलः ॥

---

अथ वक्ष्ये विशेषेण वर्णलेपनमुत्तमम् ।
शैलकासपिष्टकार्हा नि(त्रि)धा वै वर्णलेपनम् ॥ १ ॥

शैलजे वर्णपेक्षा चेदङ्गोपाङ्गखिलामधि ।
उपरिष्टाच्चाद्यतः स्यात्मशकला प्लावयेत् ॥ २ ॥
श्वेतवद्यस्तु तदूर्ध्वे चित्यणं लिप्यश्वेतश्वेतवर्णादमस्तु (?) ।
त्रिम्बोचिरलिप्रतिष्ठासम्यगागाचरेत् ॥ ३ ॥(?)
अथवा शैलजे बिम्बे पटाच्छदं विनोर्ध्वतः ।
यवमानं तु लिप्याचित् .... ... ...नमः ॥ ४ ॥
श्वेतं च बिम्बवर्णं च क्रमेणोचितं लिपेत् ।
शिलागर्भमिदं ख्यातं पर्णहीनाममेव वा ॥ ५ ॥
शूलस्थापनकर्मादि दारुगर्भे तु पूर्ववत् ।
चित्रं वाऽप्यर्धचित्रं वा पक्षेष्टकस्मयान्वितः ॥ ६ ॥
अङ्गं समं कर्णकं कृत्वा पठमं छादयेत्ततः ।
चर्वाष्ठानि च सर्वाणि शैलजे तु यथा तथा ॥ ७ ॥
कर्तव्यमिष्टगर्भे तु दारुमित्रे तु तन्तु वा ।
एवं त्रिविधनित्य तु वर्णलेपमुदाहृतम् ॥ ८ ॥
आदौ श्वेतनिभं लिप्य सबास्यस्यजमेव वा ।
क्रमेण श्वेतवर्णं तु त्रिभक्त्या वा तु लेपयेत् ॥ ९ ॥
तदूर्ध्वे पाजवर्णं तु लेपयेद्द्विजसत्तमः ।
सितबिम्बनिभं चैव समं मिश्रं तु वाक्य(स्तु)वत् ॥ १० ॥
सितं वर्णेन बिम्बानां मधुवर्णनिभं भवेत् ।
रक्ष्यादीनिभास्यानां पाण्डुवर्णं प्रकल्पयेत् ॥ ११ ॥
बद्धसंचं च मेवं च एवं [तत्तु] त्रिधा भवेत् ।
कपित्थनिर्यासेनैव त्रिसंध्यं तु प्रकल्पयेत् ॥ १२ ॥
स्वच्छतो लेपमाख्यातं मध्यमं मधुसदृशम् ।
तरुणं दधिसादृश्यं स्निग्धं द्रोणदरं भवेत् ॥ १३ ।
मेदुरेण भवेच्छिष्टं [त्वेवं] संधानमाचरेत् ।
कल्पमर्दनकार्ये तु कारयेन्द्रध्यसारिणा ॥ १४ ॥
कल्पवत्स्वच्छजलेनैव पेषणं तु समाचरेत् ।
सुधाकर्मजलोपेते महापेमेषचर्मयोः ॥ १५ ॥

पर्यासारं तु बद्धं स्याज्जलपात्र्यईका भवेत् ।
जलपात्तिविना यत्र तत्र कापित्थज द्विजः ॥ १६ ॥
निर्यासजलसंबन्धमुक्तमन्यत्र कारयेत् ।
कल्कं षोडशधा भज्य षट्पञ्चचतुरं तु वा ॥ १७ ॥
कपित्थनिर्यासेनैव स्वच्छं नैव जलं भवेत् ।
सकृच्चिक्कणलेपं तु कारयेद्द्विजसत्तमः ॥ १८ ॥
चिक्कणं कल्कसारं च द्विविधं चिक्कणं भवेत् ।
जलपात्रं सुधाकुम्भे चिक्कणं शर्करद्रवम् ॥ १९ ॥
चिक्कणं द्विविधं चैव कल्पयेत्तु यथोचितम् ।
चिक्कणं कल्कबन्धं तु दशभागविभाजिते ॥ २० ॥
एकांशरहितं बद्धं शिलोपवनं तु (लालेपन)योग्यकम् ।
चिक्कणे बन्धतुल्यं वा सितलेपनकर्माणि ॥ २१ ॥
सितबन्धसमं वाऽथ तद्दशांशं विहीनकम् ।
पास्थांवर्णस्य बद्धस्य स्त्री(त्रिः)कृत्वा पांमु(सु)लेपनम् ॥ २२ ॥
षड्वर्णं तु ततो लेप्यं यथाक्रमेण देशिकः ।
बिम्बसर्वतवर्णं तु षट्कृत्वः सालिपेत्तथा ॥ २३ ॥
पामुवार्णं तु विंशांशे त्वंसहीनं तु वर्जयेत् ।
षट्पषादिकवर्णस्य बन्धमित्युच्यते मया ॥ २४ ॥
तदानीं वर्णबन्धं तु विंशांशेऽशविहीनकम् ।
द्वितीयं वर्णबन्धं स्यात्तन्वत()द्धन्धनं ततः ॥ २५ ॥
षण्णामपि सवर्णाद्या बन्धमेवं क्रमोन्नतम् ।
प्रथमेत्युच्यते बन्धे षड्विधं च लिपेत्क्रमात् ॥ २६ ॥
पत्रं बन्धं च मन्वन्तं न तथा . . .... ... ।
प्रवर्तय षडेतानि वर्णलेपक्रमं विदुः ॥ २७ ॥
दीर्घपत्रमिति ख्यातं ततोऽन्यच्च द्विभाजितम् ।
स्वर्णचूर्णसमायुक्तं वर्णलेपप्रवर्तकम् ॥ २८ ॥
षड्वर्णक्रममेवं हि लेपयेत्तु परस्परम् ॥ २९ ॥

इत्यंशुमद्भेदे काश्यपशिल्पे वर्णलेपनं नाम
षडशीतितमः पटलः ।

———

॥ अथ सप्ताशीतितमः पटलः ॥

---

अथ वक्ष्ये विशेषेण भक्तानां लक्षणं परम् ।
सर्वेषामपि भक्तानां पदं चतुर्विधं भवेत् ॥ १ ॥
सालोक्यं चैव सामीप्यं सायुज्यं च तथैव च ।
सारूप्यं च वि(प)दं विप्र चतुर्भेदमुदाहृतम् ॥ २ ॥
पुरुषो वा स्त्रियो वाऽथ तेषु यत्पादमाश्रितम् ।
तत्तत्पादानुकूल्यं वा सालोक्यपदमाश्रितम् ॥ ३ ॥
तदा सामीप्यदेशश्च मम(रु)चिराकृतिस्तु वा ।
ममचिरादिभिः कुर्याच्छेषाद्रे पादमाश्रिताः ॥ ४ ॥
बालश्च यौवना वृद्धस्त्रिविधस्य प्रिया ता(था) ।
त्रिविषादाकलाशब्दं तपसाचालसज्जिता ॥ ५ ॥
तस्मात्सप्ततिवर्षं वा या सा यौवनान्विता ।
तदूर्ध्ववयसोपेतं वृद्धा तु निन्द्रबन्धनम् ॥ ६ ॥
बालास्तु पञ्चतालेन शेषा वसुमयेन वै ।
स्थानकं चासनं चैव यानमृत्तन एव च ॥ ७ ॥
चतुर्भेदेन कर्तव्यं भक्तानां मानुषाद्बुधः ।
अभङ्गं समभङ्गं वा अतिभङ्गमथापि वा ॥ ८ ॥
सव्यं वामस्य पादं तु कुञ्चितं त्वितरस्थितम् ।
द्वौ स्वजानुचितां धृत्वा हृदयेऽब्जलिखेऽथ वा ॥ ९ ॥
लम्ब्यं दक्षिणपादं तु हस्तं पूर्ववदेव हि ।
आसनं पञ्चसप्तं वा नवमं तु शिखोपरि ॥ १० ॥
त्रयोदशपरिवाथ प्रकीर्णकं तु ततो भवेत् ।
महेन्द्रगृहरक्षेते पुष्पदन्ते तथैव च ॥ ११ ॥
भल्लाटक्यां शवे बाधाप्रवेशं परिकल्पयेत् ।
प्राङ्मुखानामपीन्द्रः स्यादुदगग्रं तथैव च ॥ १२ ॥
मनुपक्षकला वाऽथ सत्पादशपथं तु वा ।
नन्द्यावर्तमिदं पञ्चभेदमत्र विधीयते ॥ १३ ॥

महेन्द्रादिग्वंशकेष्वेव प्रवेशस्तु प्रकीर्णवत् ।
प्राङ्मुखं रसवीथी स्यादुदग्वक्त्रेव विंशतिः ॥ १४ ॥
अष्टाविंशतिकाया वा तावदेव विवर्धनात् ।
एवमष्टविधं ख्यातं श्रीपतिं तललक्षितम् ॥ १५ ॥
एतद्द्वाराष्टकोपेतमुपद्वाराष्टकं भवेत् ।
अथवा वेदवेदांशं वारईशं तु प्रागिव ॥ १६ ॥
दण्डकं न्यस्तवस्तूनां भेदमेकमनेकधा ।
ग्रामादीनां तु विस्तारं भानुजन्माष्टसप्तधा ॥ १७ ॥
भूतवेदांशकं भूत्वा नन्दसप्तगुणांशकम् ।
भूतवेदाग्निभागं तु ग्रामे वप्रवि(वी)थी भवेत् ॥ १८ ॥
मानसूत्राद्बहिर्वप्रादन्तरं षड्विधं भवेत् ।
एकद्वित्रिचतुष्पञ्चहस्तं वा वप्रविस्तरम् ॥ १९ ॥
त्रिपञ्चसप्तहस्तं वा नवरुद्रकरं तु वा ।
त्रयोदशकरं वाऽथ वप्रतुङ्गमुदाहृतम् ॥ २० ॥
त्रिचतुष्पञ्चषट्सप्तवस्वंशं वा विशेषतः ।
वप्रमूलतलं कृत्वा एकांशेनाग्रविस्तरम् ॥ २१ ॥
शिलाभिर्वेष्टकाभिर्वा मृदा वा परिकल्पयेत् ।
छत्रदण्डाम्बुदाभं वा कुकलासपराकृतिः ॥ २२ ॥
इहास्यपरिवद्वाऽथ वप्रविषपमाचरेत् ।
करालमुद्गगुल्मासकल्कचिक्कणकर्मवाम् ॥ २३ ॥
लाक्षां समालिपेदूर्ध्वे पिष्टकाश्ममयूरपि ।
मनुयो दारुभिः पत्रैश्छादयेत्तु तृणादिभिः ॥ २४ ॥
तद्बाह्येऽभ्यन्तरे चैव खलु रेचेष्ट मानतः ।
वासार्थे स(श)कटादीनां तक्षकाणां विशेषतः ॥ २५ ॥
तद्बाह्येऽभ्यष्टमानेन पञ्चभूम्याः परं भवेत् ।
तद्बाह्येऽभ्यष्टमानेन परिखां परिकल्पयेत् ॥ २६ ॥
वप्रस्याभ्यन्तरे विप्र देवतास्थापनं भवेत् ।
शिवहर्म्ये च मातॄणां सब्रबाह्ये तु वा भवेत् ॥ २७ ॥
परिखस्य तु बाह्ये वा तौ संकल्प्य द्विजोत्तमः ।
आदित्यांशे तु भानोश्च आग्नेय्यां कालिकोष्ठकम् ॥ २८ ॥

भूशांशे विष्णुगृहं स्याद्याम्ये षण्मुखमन्दिरम् ।
शास्तुर्गृहं अगांशे तु नैर्ऋत्यां केशवालयम् ॥ २९ ॥
सुग्रीवांशे गणाध्यक्षं पुष्पदन्तपदेऽथवा ।
वारुण्यां विष्णुगेहं स्यात्सुग्रीवांशे हलालयम् ॥ ३० ॥
भृङ्गराजांशके पाशयक्ष्मे चैव विनाशकौ ।
मदिरालयं तु वायव्ये मुख्ये तु यमभूयकम् ॥ ३१ ॥
मातृणामालयं सौम्ये वायव्यां करणेऽपि वा ।
ईशाने शिवहर्म्यं स्यादीशानानन्तरेषु वा ॥ ३२ ॥
पर्जन्यांशे जयांशे वा हेन्द्रावाग्भोगमे वा ।
मारुतं केतुना विम कर्तव्यं तु शिवालयम् ॥ ३३ ॥
शिवालयं मातृकोष्ठं कर्तव्यं तु बहिर्मुखम् ।
अभ्यन्तरमुखं विष्णुं विवस्वान्पश्चिमाननम् ॥ ३४ ॥
शेषाः पूर्वमुखाः सर्वे कारयेद्विधिपूर्वकम् ।
सूत्रसंन्धौ चतुष्के तु शूले चैवाष्टकेऽपि वा ॥ ३५ ॥
षट्के चैव तु वीथ्यग्रे देवालयं द(हि)कारयेत् ।
वापीकूपतटाकादीन्सर्वत्र परिकल्पयेत् ॥ ३६ ॥
ब्रह्मांशे शेषभस्थानं वारुणे हरिमन्दिरम् ।
बाह्ये चैव कुलालानां नापितानां तु संकरे ॥ ३७ ॥
दक्षिणे शेदसीनां तु कारुणां चैव तत्र वै ।
मत्स्योबहिर्हतानां तु पश्चिमे वासमुच्यते ॥ ३८ ॥
उत्तरे चैव किकाणां अपरे तत्समीपके ।
तद्बाह्ये त्वबाह्ये वा कर्मकारा तथानले ॥ ३९ ॥
बाह्ये त्वल्पदूरे तु रजकानां गृहं भवेत् ।
तद्बाह्ये कोशमात्रे च चण्डालावासमुच्यते ॥ ४० ॥
शंकरे परिखा तग्र(द्र)च्छतदण्डे श्मशानकम् ।
वायव्यां च श्मशानं तु प्रागुक्तेन विशेषतः ॥ ४१ ॥
अपरं मानसूत्रं तु बाह्ये सालान्तरे भवेत् ।
महेन्द्रत्य(न्द्राद)ग्निभागान्तं भोजनं च विधीयते ॥ ४२ ॥
दण्डदक्षिणपार्श्वे तु पश्चिमे कुसुमिकालयम् ।
बस्त्रेणापि कचेदण्डुदण्डलङ्घान्यकंकटम् ॥ ४३ ॥

उत्तरे लवणं चैव तैलगन्धं तु पुष्पकम् ।
होमं रक्तादयश्चैव सर्वत्रैकाहकं भवेत् ॥ ४४ ॥
ग्रामादिलक्षणं प्रोक्तं गृहविन्यासलक्षणम् ॥ ४५ ॥

इत्यंशुमद्भेदे काश्यपशिल्पे ग्रामादिलक्षणं नाम
सप्ताशीतितमः पटलः ।

---

॥ अथाष्टाशीतितमः पटलः ॥

---

अथ वक्ष्ये विशेषेण गृहविन्यासलक्षणम् ।
शूले सूत्रे च सत्वे च चतुष्के चाष्टके तथा ॥ १ ॥
आलयाग्रे सभाग्रे च चैत्यवृक्षसमीपके ।
श्मशाने पर्वताग्रे च क्षारभूमौ तथैव च ॥ २ ॥
भुजङ्गनिलये चैवरुमन्यावाक्षं न कारयेत् ।
वास्तुमध्ये स्तवं मन्तु पुरीषस्य हृदिर्भवेत् ॥ ३ ॥
चतुष्कर्णगताः सूत्राः सिरा इत्यभिधीयते ।
प्रातर्मुखस्य सूत्राणि स्थानसंज्ञा प्रकीर्तिता ॥ ४ ॥
गुणस्य सूत्रयोगं तु संधिरित्यभिधीयते ।
तदेव सूत्रयोगं यत्तच्चतुष्कमुदाहृतम् ॥ ५ ॥
रससूत्रप्रयोगं यत्तदष्टकमुदाहृतम् ।
चतुष्कौ सिरयोगश्च चुलमित्यभिधीयते ॥ ६ ॥
केवलं सहजं चैव जगृहक्ष्मविधिर्भवेत् ।
समन्त्रं केवलं ख्यातं बाह्ये त्वावृतवीथिकम् ॥ ७ ॥
तद्बाह्ये त्वावृद्धीमान्दासीदासनिवासका ।
विधिनावेशनीत्रं सतिकाकारवद्भवेत् ॥ ८ ॥
आस्यावृतग्रहादीनि ग्रामवास्तुवदाचरेत् ।
आलयावृतवीथ्यादि हीनाकीलबलं गृहम् ॥ ९ ॥
यत्तद्गृहववास्तु स्यात्कूर्करिष्ठयानुकूलकम् ।
केवलं तु गृहक्षेत्रे वाऽऽरामादिषु वा कृते ॥ १० ॥

नन्दांशं वर्जयेत्क्षेत्रे सिरसूत्रसमान्वितम् ।
अजांशमध्यमे वर्ज्यं पुष्पादिऋक्षभागतः ॥ ११ ॥
राशयास्त्विति विख्याताः प्राग्वद्दाक्षिण्यमेव च ।
तेषु कर्कधनुर्मीनं मिथुनं चैव वर्जयेत् ॥ १२ ॥
शेषेष्विष्टं गृहं कर्म भानुकूलान्वितं गृहम् ।
ग्रामादिगृहश्रेणीषु राजा च सहजं भवेत् ॥ १३ ॥
भूपरीक्षामायसर्वं प्रागिवैव समाचरेत् ।
कर्षणे ह्या(ह्यु)दितं ऋक्षं तिथिवारस्तदुक्तकम् ॥ १४ ॥
दर्शनं चोभयं सर्वं शुभयुक्तं परिग्रहेत् ।
गृहारम्भं तु कर्तव्यं गर्भन्यासपुरःसरम् ॥ १५ ॥
गर्भन्यासं प्रकर्तव्यं प्रागुक्तविधिना बुधैः ।
भल्लाटांशे महेन्द्रांशे गृहक्षतपदे तथा ॥ १६ ॥
पुष्पदन्तपदे चैव पूषादिषु चतुर्ग्रहे ।
द्वारस्य दक्षिणे वाङ्घ्रियोगमूले तथा बुधः ॥ १७ ॥
गर्भन्यासं प्रकर्तव्यं तस्योर्ध्वे प्रथमेष्टका ।
गृहदेवमिति ख्यातं देहगर्भमिति स्मृतम् ॥ १८ ॥
सगर्भं सर्वसंपत्स्यादगर्भं सर्वनाशनम् ।
षट्कौशिके जीवयुक्ता विधेया गर्भिणी भवेत् ॥ १९ ॥
गृहिणी गर्भिणी चेत्तु गर्भनाशं न कारयेत् ।
गर्भस्योपरि गर्भः स्यात्कर्तव्यांशं विनश्यति ॥ २० ॥
जीर्णे गृहे पुनर्वाऽपि गर्भं पूर्ववदाचरेत् ।
विजयं त्वि(त्व)तिकान्तं च सुकान्तं वर्धमानकम् ॥ २१ ॥
शृ(श्री)कांतं वसुकान्तं वा वर्धमानावधा(सा)नकम् ।
श्रीकरं चातिभद्रं च गृहभेदं तु षड्विधम् ॥ २२ ॥
विमन्वे(विजयं त्वे)कब(शा)ला स्याद्द्विशाला त्वितिकान्तकम् ।
त्रिशाला वसुकाख्या(न्तं) वा अथवा(वर्धमा)नं चतुःस्स्यततुगृह)म्
श्रीकरं सप्तशाला स्याद्दशशालाऽतिभद्रकम् ।
त्रिचतुर्हस्तमारभ्य द्विद्विहस्तविवर्धनात् ॥ २४ ॥
नन्दकर्मकरान्तं तु युग्मयुग्मं चतुश्चतुः ।
अष्टधा विजयप्रास्म(यं प्रोक्तं) द्विशाला विक्षि(त्वति)कान्तकम् ॥

त्विति कान्तमथोच्येत द्विद्विहस्ताविवर्धनात् ।
नन्दकर्मकरारभ्य द्विद्विहस्तविवर्धनात् ॥ २६ ॥
सप्तसप्ताष्टषष्ठ्यन्तं वर्धमानं तु षड्विधम् ।
तेष्वादौ मनुभेदौ तौ सप्रताकणकं ग्रहम् ॥ २७ ॥
दशषड्द्वात्रिंशद्भेदाविन्त्तकणकान्वितम् ।
वर्धमानतमं व्यासायामयुक्तं सपत्तिकम् ॥ २८ ॥
दक्षिणे दक्षिणे वाऽपि वर्धमानस्य पार्श्वके ।
सुकान्तसहितं यत्तच्छ्रीकरं त्विति विद्यते ॥ २९ ॥
पार्श्वयोर्वर्धमानस्य शुकान्तौ तौ विराजितौ ।
अतिभद्राविति ख्यातौ मूलगेहान्तरक्षितौ ॥ ३० ॥
विस्तारसदृशः कायः सद्विहस्तं च भाति(जि)तौ ।
विस्तारसदृशाद्वेदहस्तं चौन्ववतं भवेत् ॥ ३१ ॥
प्रकल्पं षट्कराधिक्यं माशाभासाष्टकारधीः ।
कुब्जादीन्हस्तमानाख्यं पङ्क्तिमानमथ शृणु ॥ ३२ ॥
विस्तारसदृशं याति च्छन्दं भागद्वयाधिकम् ।
चतुर्भागाधिकायश्च चिदमेवं द्विधा भवेत् ॥ ३३ ॥
देवद्विजमहीनाथो जि(चित)न्ज्यात्यायमायतम् ।
राजारसनयुक्तं नाभिचतुर्जातिगृहं शुभम् ॥ ३४ ॥
शेषाणामपि सर्वेषां चित्तादीनि सुखावहम् ।
सर्वं पूर्वोदितानां तु योग्यमृद्धिकरं भवेत् ॥ ३५ ॥
विजयादिगृहाणां तु जाद्या(त्या)यामं समं भवेत् ।
हस्तमानेन या(जा)त्यादिभागं चैव समाचरेत् ॥ ३६ ॥
न कुर्यात्संकरं तेषु संकरं तत्तु नाशनम् ।
आच्यद्विहस्तमानं तु व्यासपङ्क्तिसमं तु वा ॥ ३७ ॥
पदत्रयं स्वस्तिकं तु व्यसदायतुनहिश्चेत् । (?)
पदहीनं न कर्तव्यं सर्वसंपद्विनाशनम् ॥ ३८ ॥
एकबन्धं त्रिबन्धं वा अथवाऽनेकबन्धनम् ।
कल्पिते मानसूत्रात्तु नीत्रं परात्तु वा भवेत् ॥ ३९ ॥
सर्वेषां विजयादीनां विन्यासं तु वदामि ते ।
देवभागं तु विस्तारे आयामे तु रसांशकम् ॥ ४० ॥

पक्षांशं ग्रीवविस्तारं मेखलेन्द्रं च तत्समम् ।
गुणांशं ग्रहदीर्घे तु खुरदीर्घे तु तत्समम् ॥ ४१ ॥
परितः कुडयसंयुक्तं द्वारनेत्रादिके द्विज ।
कल्पितं तु ग्रहं ख्यातं रङ्गः पादोत्तरान्वितम् ॥ ४२ ॥
दक्षिणे तु ग्रहं तच्छ्रीरङ्गमायुष्करं भवेत् ।
सौख्यं तु दक्षिणे गेहं रङ्गपुत्रविवर्धनम् ॥ ४३ ॥
ग्रहं व्यासे गुणांशे तु अंगणं एकभागया ।
द्विभागं ग्रहविस्तारं आयामं पूर्ववद्भवेत् ॥ ४४ ॥
ग्रहायामे तु नन्दांशे इन्द्रांशं दक्षिणे त्यजेत् ।
गुणांशं वामपार्श्वे च विशेद्वेश्म तदन्तरे ॥ ४५ ॥
षडंशे च विशाले तु आयामे दशभाजिते ।
द्विभागं ग्रहविस्तारं च क्रमेण द्विभागया ॥ ४६ ॥
मुखद्वारविभागेन कल्पयेत्तु यथाक्रमम् ।
पार्श्वयोस्तु गुणांशेन गृहायामं विधीयते ॥ ४७ ॥
तयोर्मध्ये गृहांशे तु गमपादोत्तरान्वितम् ।
हरेग्रहारग्रंशे तु नवांशेंऽशद्वयं त्रिभिः ॥ ४८ ॥
युगांशैः पुरतोऽलिन्दे क्रमेणैव प्रकल्पयेत् ।
आयामार्धे ग्रहारामं कृतं मध्येकाभित्तिकम् ॥ ४९ ॥
भूतादि नन्दरुद्रांशं चरणव्यासभाजिते ।
अनलादितिमध्ये तु सव्येनैव क्रमान्वितम् ॥ ५० ॥
यथाक्रमेण नित्यां तु स्थापयेन्मध्यमङ्घ्रिमान् ।
गृहाङ्घ्रिमध्यभित्तेस्तु चतुष्कं गृहमध्यगम् ॥ ५१ ॥
हस्तरामगन्यगुपेतवत्क्रपादुक एव वा ।
विदुवातिग्रहाणां तु सामान्यं कुडयविस्तृतम् ॥ ५२ ॥
अथवाऽङ्घ्रिविशालेन त्रिचतुष्पञ्च एव वा ।
एवं मध्यविशालं तु षड्विधं परिकीर्तितम् ॥ ५३ ॥
अधिष्ठानादिवशतः प्रासादवदलक्षितम् ।
विजयाख्यस्य नेत्रे द्वे उभयोः पार्श्वयोः कुरु ॥ ५४ ॥
महानासिमिवाकारं नेत्रद्वयं प्रकल्पयेत् ।
पुरे पुरे चाल्पनाडयं त्रिवक्त्रयसमन्वितम् ॥ ५५ ॥

कल्प्यैव गोपुराकारं विजयाख्यगृहं भवेत् ।
सभारशिरोवापि लुनिराहाशिषं भवेत् ॥ ५६ ॥
पार्श्वयोश्चैकभागेन मालिनं च समावृतम् ।
पुरतो भद्रयुक्तं वा चतुर्वंशायतस्ततम् ॥ ५७ ॥
विजयं त्वेवमाख्यातमतिकान्तमथोच्यते ।
नेत्रत्रयसमायुक्तमितिकान्तं प्रकल्पयेत् ॥ ५८ ॥
देवभूसुरभूपानां योग्यं नैवान्यवर्गिणाम् ।
कतिधाकृतिवंशाग्रं चतुर्नेत्रयुतं तु वा ॥ ५९ ॥
एकानेकतलं वाऽथ प्रासादवदलंकृतम् ।
कर्तुरिच्छानुसारेण स्थानविन्यासमाचरेत् ॥ ६० ॥
विस्तारं धर्मभागं च धर्मभागविवर्जिते ।
बाह्ये वारं शिखांशेन पक्षांशग्रहविस्मृ(स्तृ)तम् ॥ ६१ ॥
गृहाग्रे वारमेकांशं कर्णतुङ्गं युगांशकम् ।
शेषभागं खलूरिः स्यात्परितः कुड्यसंयुतम् ॥ ६२ ॥
एतदेवाङ्कणं विप्र मण्डपं परिवाच्यते ।
तदावृतांशवाथ स्यात्पक्षांशेन खलूरिका ॥ ६३ ॥
शेषं पूर्ववदुद्दिष्टं साङ्गोपाङ्गं द्विजोत्तम ।
अथवा मण्डपं वर्ज्यं प्रागिवैव प्रकल्पयेत् ॥ ६४ ॥
मध्यरङ्गसमायुक्तं मुख्यलोहं द्विवासकम् ।
शालाविरहितस्थाने कुड्यद्वारं प्रयोजयेत् ॥ ६५ ॥
जात्यादाभासपर्यन्तमेवमेवाङ्कणाद्बहिः ।
शेषांशमङ्कणं ख्यातं बाह्यालिन्द्रं विना तु वा ॥ ६६ ॥
महेन्द्रे ग्रहक्षते चैव पुष्पदन्ते तथैव च ।
भल्लाटभ्यां शके चैव सर्वेषां द्वि(द्वा)रमुच्यते ॥ ६७ ॥
द्वारं चैवोपद्वारं च तेष्वेकांशेषु कल्पयेत् ।
जयन्ते जलनिष्ठान्तं मुख्यांशे वा विशेषतः ॥ ६८ ॥
द्वारस्य वामयोगस्य जलनिस्रं च दक्षिणे ।
पश्चिमे उत्तरे चैव जलमार्गं न कारयेत् ॥ ६९ ॥
यदि होमेन कर्तव्यं कर्तुर्मरणमादिशेत् ।
प्रागुदक्प्रागवत्प्रत्यगुदग्वाहन्तिकान्तिके ॥ ७० ॥

अश्रि(ति)कान्तमिति ख्यातं इतरं सौम्यमुच्यते ।
अतिकान्तमिति ख्यातं सुकान्तमथ वक्ष्यते ॥ ७१ ॥
गृहयामे षडंशे तु द्विभागं ग्रहविस्तृतम् ।
वेदांशे नाङ्कणं विद्यात्द्व्यंशेनैव खलूरिका ॥ ७२ ॥
चतुर्णेत्रसमायुक्तं बाह्ये वारयुतं तु वा ।
षडष्टांशे तदायामे द्विभागं ग्रहविस्तृतम् ॥ ७३ ॥
मुख्यगेहस्य चाग्रे तु अलिन्द्रं च शिवांशकम् ।
षडंशं चाङ्गणं ख्यातं द्व्यंशाग्रे तु खलूरिका ॥ ७४ ॥
रसधर्मांशके तारे चायामे च प्रकल्पयेत् ।
द्विभागं ग्रहविस्तारं मुखालिन्द्रं द्विभागया ॥ ७५ ॥
अष्टांशे नाङ्गणं ख्यातं शेषांशे तु खलूरिका ।
रसभागे कृते व्यासे भान्वंशे वा तदायमे ॥ ७६ ॥
द्विभागं ग्रहविस्तारं द्विद्व्यंशं चाङ्गणं भवेत् ।
अलिन्द्रं तु शिवांशेन दशांशं त्वङ्कणं भवेत् ॥ ७७ ॥
प्रागिवैव खलूरिः स्यात्सर्वेषां बाह्यवारकम् ।
मानसूत्राद्बहिस्त्वेवं गृहमानं सदा भवेत् ॥ ७८ ॥
वस्वंशे तु तदायामे पक्षांशं ग्रहविस्मृ(स्तृ)तम् ।
गेहानामग्रतोऽलिन्द्रं एकांशेन विधीयते ॥ ७९ ॥
वेदांशेनाङ्गणं कुर्याद्वस्वंशेन खलूरिका ।
परितोऽवहितं कालं शंचांगणं भवेत् ॥ ८० ॥
वसुधर्मततायामे द्विभागं ग्रहविस्मृ(स्तृ)तम् ।
अङ्गणं च शिवांशेन मुख्याग्रेंऽशं तु वारकम् ॥ ८१ ॥
पार्श्वयोस्तु तथावारं वस्वंशं त्वङ्गणं भवेत् ।
द्व्यंशेनैव खलूरिः स्यात्पार्श्वाग्रं द्वारहीनकम् ॥ ८२ ॥
अङ्कणं विंशदंशेन कल्पयेत्कल्पावित्तमः ।
वस्वेकांशे तदायामे अष्टाविंशतिमङ्गणम् ॥ ८३ ॥
शेषं पूर्ववदुद्दिष्टं खलूरिं चैव पूर्ववत् ।
वसुमन्वंशताराये द्विभागं ग्रहविस्तृतम् ॥ ८४ ॥
अङ्गणं च द्विभागेन द्वारं तत्समुच्यते ।
मुख्यगेहाग्रहस्तस्य वारं चक्रमणं भवेत् ॥ ८५ ॥

चतुर्विंशतिभागेन अङ्कणं परिकल्पयेत् ।
द्व्यंशेनैव खलूरिः स्यादायामे तु कलांशके ॥ ८६ ॥
मुख्यगेहाग्रतो वारं गुणांशेनैव कल्पयेत् ।
अष्टाविंशतिभागेन अङ्कणं तु प्रकल्पयेत् ॥ ८७ ॥
शेषं पूर्ववदुद्दिष्टं युक्त्या सर्वांशसंयुतम् ।
कर्मभिः पार्श्वयोः कल्प्यं द्वारं कुर्यामुच्यते ॥ ८८ ॥
परितः कुड्यसंयुक्तं प्रागुद्द्वाराजलोद्गमम् ।
रसभागे तु विस्तारे दशभागे तदायते ॥ ८९ ॥
वस्वंशेनाङ्कणं विद्यात्तदायामो द्व्यंगुलम् ।
अनालयस्य चाग्रे तु द्वारं येनांशकेन तु ॥ ९० ॥
शेषं पूर्ववदुद्दिष्टं बाह्यवारं च प्रागिव ।
गेहस्य सेतुवस्वंशे छायामे तु तदंशके ॥ ९१ ॥
ब्रह्माङ्कणं युगांशेन वारं तस्य त्रृतांशकम् ।
द्विभागं ग्रहविस्तारं मुख्यं चेद्वंशभित्तिकम् ॥ ९२ ॥
कुड्याभद्वारसंयुक्तं परितः कुड्यसंयुतम् ।
विस्तरे वसुभागे तु दशभागे तदायते ॥ ९३ ॥
चक्राणां तु विभागेन शेषं पूर्ववदाचरेत् ।
अथवा चूर्कणं वर्ज्यं वस्वंशेनाङ्कणं भवेत् ॥ ९४ ॥
गृहव्यासे तु वस्वंशे भान्वंशे तु तदायते ।
पूर्वे वा ग्रहचक्रे च द्व्यंशं चंक्रमणं भवेत् ॥ ९५ ॥
पुरस्तान्मुख्यगेहस्य द्वारं व्योमांशमुच्यते ।
अङ्कणं चाष्टविंशांशं कल्पयेत्कल्पवित्तमः ॥ ९६ ॥
मुख्यगेहस्य मध्ये तु रङ्गयोः पार्श्वयोर्गृहम् ।
नेत्रं कुड्यसमीपे तु गेहे वेशदुदाहृतम् ॥ ९७ ॥
वसुमन्वंशके व्यासे चाऽऽयामे च कर्मकृते ।
अङ्कणं वेदवस्वंशं पुरा चेग्रे तु वारकम् ॥ ९८ ॥
अथवा पार्श्ववासाग्रे वारं चङ्क्रांशमानतः ।
द्विभक्तिविसृताष्टांशदीर्घं चैवाङ्कणं भवेत् ॥ ९९ ॥
अथवा वांपराष्टांशं पक्षवारांशवांशकम् ।
अङ्कणं भानुभागेन विस्तारं यद्द्वयं रसम् ॥ १०० ॥

षोडशांशे गृहायामे विस्तरे वसुभागके ।
द्विभागं गृहविस्तारं कलांशं चाङ्कणं भवेत् ॥ १०१ ॥
अङ्कणावृतवारं तु शून्यांशेन प्रकल्पयेत् ।
पुरे पुरेऽग्रहारे तु शिवांशं चाङ्कणं भवेत् ॥ १०२ ॥
इतराध्वग्रहाणां तु बाह्यं वासवकारकम् ।
नरांशे विस्तृतायामे युगांशं त्वङ्कणं भवेत् ॥ १०३ ॥
परितोऽलिन्द्रमेकांशं द्विभागं ग्रहविस्तृतम् ।
बाह्येऽलिन्द्रं शिवांशेन चतुर्दिग्भद्रसंयुतम् ॥ १०४ ॥
चतुर्विभक्तिविस्तारं नीव्रस्य भद्रमस्तकम् ।
मुखभद्रं कणं लिप्य सोपानं भद्रपार्श्वयोः ॥ १०५ ॥
पुरतो भद्रपोपेतं मण्डपोपेतविनतः ।
सर्वेषामपि सामान्यं मध्यभद्रं च मण्डपम् ॥ १०६ ॥
मन्वंशे तु तदायामे त्वंशं त्वंचाङ्कणं भवेत् ।
शेषं पूर्ववदुद्दिष्टं षोडशान्ते तदायते ॥ १०७ ॥
चक्रमार्णं द्विभागेन कल्यंशे तु प्रागिवा ।
अषड्भागे तदायामे प्रमुखे वारकद्वयम् ॥ १०८ ॥
शेषं पूर्ववदुद्दिष्टमेकानेकतलान्वितम् ।
भानुभागे च मन्वंशे कलांशेऽष्टादशांशके ॥ १०९ ॥
विंशं द्वाविंशदंशे च गृहव्यासविभाजिते ।
जात्याद्या भासपर्यन्ता यामेष्वष्टसु यामनम् ॥ ११० ॥
बाह्यब्रह्मंकणादीनि परितः क(प)रिकल्पयेत् ।
एकं वा द्वित्रिभागं वा बाह्यवारं प्रकल्पयेत् ॥ १११ ॥
गृहव्यासं द्विभागेन तथा च चङ्कणावृतम् ।
शेषांशमङ्कणं ख्यातं छिदिर्दं वांबुपाननम् ॥ ११२ ॥
इष्टदीर्घहरङ्गं च कल्प्यं कुड्यं तथा भवेत् ।
एकानेकतलं वाऽथ प्रासादवदलंकृतम् ॥ ११३ ॥
उत्तरं वाजनं साब्जक्षेपणं क्षुद्रवाजनम् ।
इष्टकाच्छादनं चैव कल्पास्तरणं तथा ॥ ११४ ॥
मृतगुल्मासकल्कं च प्रस्तरे सकलं प्रति ।
शङ्खावन्तं तु सोपानं कर्णारध्वजमेव वा ॥ ११५ ॥

विजयादिग्रहाणां तु अङ्ग्र्युक्त्या त्वनेन वै ।
विस्तारसदृशं तुङ्गमेकभूमौ विधीयते ॥ ११६ ॥
तस्माद्विभज्यदीर्घे तु .... रोहितोन्नतम् ।
त्रितलस्थं तु भागं तु पञ्चभूमौ रसांशकम् ॥ ११७ ॥
अष्टभागांशकं व्यासात्पञ्चभूमोदयं भवेत् ।
दशांशे नवभूमौ च मन्वंशं सप्तभूमिके ॥ ११८ ॥
सप्तभूमोपरिष्टात्तु मर्त्यानामालयं नहि ।
एकाद्वित्रि च भूमौ वा शूद्राणां तु विधीयते ॥ ११९ ॥
वैश्यानां पञ्चभूम्यन्तं चतुर्भूम्यन्तमेव वा ।
भूपानां च सुराणां च सप्तभ्यूम्यन्तरं परम् ॥ १२० ॥
एकभूमोदयं चाष्टभागोच्चं तु धरातलम् ।
द्विभागं चरणोच्चं तु प्रस्तरोच्चं शिवांशकम् ॥ १२१ ॥
सार्धांशं तु गलोत्सेधं शिखरोच्चं द्विभागया ।
आर्धांशं तु शिखामानं क्रमेणैव तु योजयेत् ॥ १२२ ॥
शिखाविमानं चरणे प्रस्तरे शिखरे तु वा ।
गलवर्गे तु वा योज्यं त्रिष्वङ्गेषु समं तु वा ॥ १२३ ॥
रुद्रांशे द्वितलोच्चं तु व्योमांशं तु धरातलम् ।
पक्षांक्षं चरणायामं शेषं पूर्ववदाचरेत् ॥ १२४ ॥
मन्वंशे त्रितलोच्चं तु अधिष्ठानं शिवांशकम् ।
अक्षांशमङ्घ्रितुङ्गं तु शेषं पूर्ववदाचरेत् ॥ १२५ ॥
सप्ताधिकं शिवांशं तु चतुर्भूमोदये कृते ।
पक्षजन्यंशके स्तम्भतलं शेषं तु पूर्ववत् ॥ १२६ ॥
पञ्चभूमौ तु विंशांशे शिवांशं तलमानकम् ।
अश्विन्यंशं तु पादोच्चं शेषं प्रागिव कल्पयेत् ॥ १२७ ॥
त्रयोविंशांशके त्वंशतलं पादन्तु तद्द्वयम् ।
शेषं पूर्ववदुद्दिष्टं सप्तभूमोदयं ततः ॥ १२८ ॥
षड्विंशांशे विपक्षांशे धरायां चरणं क्रमात् ।
सप्तभूमं समाख्यातं अथवा विस्तमानसः ॥ १२९ ॥
सप्तहस्तं तु स्तूप्युच्चं तद्द्वयं शिखरोदयम् ।
द्विहस्ताङ्गुलमानं च मञ्चं स्थूपिसमं भवेत् ॥ १३० ॥

शीर्षं च समपादस्थं स्थलं पञ्चसमं भवेत् ।
उपानोच्चं तु षण्मात्रमेवमेव तलं विदुः ॥ १३१ ॥
एतद्वै बाहुभूमौ तु ऊर्ध्वे भूमिरुदाहृता ।
ऊर्ध्वभूचरणोच्चं तु अधमं नष्टवा भवेत् ॥ १३२ ॥
एकांशाधिकमानं तु द्वितीयस्थलपादकम् ।
अथ द्विभूमिभागं तु कृत्वैकाधिकं तु तत् ॥ १३३ ॥
तृतीयभूमिपादौ च तथा कुर्यात्तलं प्रति ।
एकभूमौ स्थलोच्चं तु मञ्चोच्चं द्वितलस्य तु ॥ १३४ ॥
स्तम्भवामे हितांशं तु मञ्चमानतिलं प्रति ।
भवभूम्येऽसितुङ्गार्धश्वरातालोदयं भवेत् ॥ १३५ ॥
सर्वेषामपि सामान्यं प्रागुक्तपादुकोन्नतम् ।
सप्ताष्टनन्दधर्मांशरुद्रांशं वाङ्घ्रिकोदयम् ॥ १३६ ॥
कृते मूलपादस्य तर्क ... .... ... ...
स्तम्भानां भूषणं विप्र प्रागुक्तविधिना कुरु ॥ १३७ ॥
पादबन्धतलं तेषां अङ्गं तेषु तलं भवेत् ।
अनपेक्षमनङ्गेषु सापेक्षाङ्गेषु योजयेत् ॥ १३८ ॥
गृहोच्छेदकच्छेदष्टध्यहा ... वा भवेत् ।
संपूज्य जगरग्राह्ययुग्महस्त .... सङ्ग्रहेत् ॥ १३९ ॥
ओजार्थपूरणार्थं च यन्मानं योजितं मतम् ।
अधिष्ठानादिवर्गेषु संमिश्रकर्षयत्कृते ॥ १४० ॥
पुरोक्तमानेनैव भवेत्मानं नान्यं विभावयेत् ।
बाह्यतो जालकं कुर्यान्तर्विन्तपादुकम् ॥ १४१ ॥
जालकं च कवाटं च इष्टस्थाने प्रकल्पयेत् ।
पादोपरि भवेत्पादं कुड्यं कुड्योपरि स्मृतम् ॥ १४२ ॥
विपरीतंविपद्येव तस्मादुक्तं समाचरेत् ।
अकरीवंशशालाग्र अष्टांशं वा चतुर्मुखम् ॥ १४३ ॥
कुण्डं वा शीर्षकं विप्र मण्डपं मण्डपाकृतिः ।
यथारुचि यथाशोभं तथा कुर्याद्गृहं बुधः ॥ १४४ ॥
दक्षिणे मूलगेहार्थं मण्डमत्युन्नतोन्नतम् ।
स्वाम्रावासं तु वा विद्यादिष्टभूमौ तु वासकम् ॥ १४५ ॥

तस्योत्तरे त्रिधावासं नैर्ऋत्यां सूतिकालयम् ।
उत्तरे भोजनस्थानं शांकरे पाचनालयम् ॥ १४६ ॥
किंचिल्लक्षणयाऽऽवासा ... ... .... वरे ।
जलद्रोणिघटं चैव पर्जन्ये वा जयन्तके ॥ १४७ ॥
ऐन्द्रे वा भोजनस्थानं पश्चिमे वा विशेषतः ॥
श्रीकरं प्राङ्मुखं भित्तिरायुष्यं दक्षिणाननम् ॥ १४८ ॥
पश्चिमाभिमुखं ऋद्धिरुत्तराग्रं क्षयं भवेत् ।
प्राक्पुरःशयनं संपद्दक्षिणादायुवर्धनम् ॥ १४९ ॥
पश्चिमे शक्तिसंतापमुत्तरे व्याधिपीडनम् ।
वंशस्यानुगतद्वारं शयनं चाग्रमृत्युदम् ॥ १५० ॥
तस्माच्छिवायामे चैव शनासत्यातौ हितौ ।
पापयक्ष्मांशके व्याधिः कर्तव्यं पचनालयम् ॥ १५१ ॥
गृहाज्जेष्ठकनिष्ठान्तं दक्षिणादुत्तरान्तकम् ।
पत्योस्तुत्रिपूर्वं तेषां हि सदनानि वै ॥ १५२ ॥
श्रेणीष्वेवं समाख्यातं .... .. ... ।
शेषाणां परितो वाऽपि कर्तव्यं येन युक्तितः ॥ १५३ ॥
अग्रे ब्राह्मे पुरस्तात्तु गोशाले दक्षिणेऽपि वा ।
हयेनावासतद्वत्स्यादुदरङ्गं तथैव च ॥ १५४ ॥
वापीकूपतटाकादि सर्वत्रैवाविरोधितम् ।
पश्चिमे वै स्त्रियाश्चाथ पुत्राणामुत्तरे गृहम् ॥ १५५ ॥
अनुजानां च तत्रैवं मर्त्यानां पुरतो हितम् ।
कर्तुरिच्छानुसारेण अनुक्तं तु समाचरेत् ॥ १५६ ॥
हस्तस्तम्भं लुपादीनि उभमेव परिग्रहेत् ।
व्यासहस्तगुणप्राप्यनागहारे तु योनिकम् ॥ १५७ ॥
कुटिनस्त्वायहस्तवस्तुब्रह्मपक्षयन्तने ।
.... जक्षामात्रं तु यथादीर्घे नागं नवगुणैः ॥ १५८ ॥
दशभूतनमृणामिदं नाहं दतद्यजनि .... ... ... ।
नेत्रगन्धे तु हरिणं पक्षणामिदं गृह ॥ १५९ ॥
ग्रमणामुदिशं वादशादयादि कल्पितम् ।
ग्रहाणां पुरे पुरे वाऽपि दक्षिणे दक्षिणेऽपि वा ॥ १६० ॥

शंकरे वा विधानेन कूटं कुर्यात्सुसुन्दरम् ।
गृहव्यसान्तरा नित्यं द्विगुणं त्रिगुणं तु वा ॥ १६१ ॥
चतुष्पञ्चगुणव्यासं द्व्यन्तरं गृहकूटयोः ।
वायोरेवमेवं तु परे बाह्यं च तच्छृणु ॥ १६२ ॥
गृहायामसमं वाऽथ द्विगुणं त्रिगुणं तु वा ।
चतुष्पञ्च वाऽथ ग्रहकूटान्तरं भवेत् ॥ १६३ ॥
ग्रहस्य सकशदीर्घं च गृहं वा पार्श्वयोः पुरे ।
पुरे कल्पं च कूटं चेदिष्टदीर्घायतनं ग्रहेत् ॥ १६४ ॥
ग्रहव्यासानुगुणं कूटं कल्पयेतियुग्मना ।
पञ्चहस्तं समारभ्य द्विद्विहस्तविवर्धनात् ॥ १६५ ॥
एकविंशतिहस्तान्तं नवधा कूटविस्तृतम् ।
विस्तारसदृशोत्सेधहस्तं वाऽष्टकारकम् ॥ १६६ ॥
अष्टहस्तं तु वाऽधिक्यकूटायामं प्रकल्पयेत् ।
विस्तारद्विगुणं मध्ये कूटायामं प्रकल्पयेत् ॥ १६७ ॥
कूटानां भागमानेन जात्यादिनियमं कुरु ।
हस्तमानेन कूटानां जात्यादिनियमं विना ॥ १६८ ॥
चतुर्भित्तित्रिशालं तु यथामश्वं तथा भवेत् ॥ १६९ ॥

---

इत्यंशुमद्भेदे काश्यपाशिल्पे ग्राममलक्षणं नामाष्टाशीतितमः पटलः ।